श्री शिवमयम्।

पत्रसंख्या



# भस्मजाबालोपनिषत्

## सटीका।

स्वस्ति श्रीभरद्वाजकुलजलधि कौस्तुभ
श्रीकण्ठमतप्रतिष्ठापक विद्येश्वरावता
रात्मकश्रीमदप्पय्यदीक्षितवंशज श्री
काळहस्तिशरणशिवानंदकर्म्मेंदि
विरचित टीकासहिता।

मुमुक्षुमनोविहारिण्य विमुक्तमुक्तिप्रकाशिनी श्रीभस्मजाबालो
पनिषदेषा श्रीकाशीक्षेत्रहनुमद्घट्टशिवमठवास्तव्याभिजन
श्रीकृष्णशिवार्यप्रभुवर्य्यधनसहायेन।

श्रीकाश्यन्तस्थ दशाश्वमेधामराख्यमुद्राक्षर
शालायाम्मुद्रापितात्रिद्वत्परिशोधिता
विजयतेतराम्।

बार्हस्पत्यमान रीत्या विश्वावसु नामसंवत्सरे आश्वीजमासे।

# शुद्धाशुद्ध पत्रिका ।

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २ | शव्द | शब्द |
| ६ | २ | वंक्ताव्या | वक्तव्या |
| ७ | १८ | धारणद्देव | धारणादेव |
| ७ | २१ | रोमोत्पति | रोमोत्पत्ति |
| ७ | २२ | भूत्वातिष्ठते | भूत्वावतिष्ठंते |
| ८ | ३ | तथैव | तथैव |
| ८ | ६ | त्तमध्व | क्षमध्व |
| ११ | ४ | प्रणवं | प्रणवं |
| ११ | ४ | सर्वस्य | सर्वस्य |
| ११ | १५ | चतुर्विंश | चतुर्विंश |
| १२ | २१ | एव | एव |
| १२ | २३ | प्रत्यगो | प्रत्यगा |
| १२ | २३ | परमंश्वर | परमेश्वर |
| १२ | २३ | सर्वं. | सर्वं |
| १२ | २४ | महादवे | महादेवं |
| १३ | २ | दलेसु | दलेसु |
| १४ | ८ | पूर्व | पूर्वं |
| १५ | ८ | प्रतिष्ठते | प्रतिष्ठिते |
| २१ | १ | द्विकक्षा | द्विकक्षया |
| २१ | १३ | त्यक्ता | त्यक्ता |
| २३ | १५ | तत्सर्वं | तत्सर्वं |
| २७ | ३ | पात्मनः | पाप्मनः |
| २७ | ५ | त्रिपुंड्र | त्रिपुंड्र |
| ३१ | ८ | व्याहरे | व्याहरे |
| ३१ | १७ | रामाम | राममाम |
| ३२ | १ | अनिंश | अनिशं |
| ३२ | २ | रोमं | रामे |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३२ | १८ | रानाम्नो | राम नाम्नो |
| ३२ | २३ | वैर्थ्या | वैय्यर्थ्या |
| ३५ | ८ | धातार्मो | धातासो |
| ३५ | १४ | यो मम | यो मम |
| ३५ | १८ | मत | मन्त्र |
| ३५ | २० | मनश्रैव | मनुश्श्रे वो |
| ३५ | २२ | श्रवै | श्रैव |
| ३८ | ११ | जायंति | जायंते |
| ४२ | ८ | जानितोत | जनितोत |
| ४२ | २२ | घटाकश | घटाकाश |
| ४५ | १६ | ब्रह्म | ब्रह्म |
| ४५ | १६ | ह्नलादपि | ह्लूलनादपि |
| ४५ | १७ | भत्र | भत्रा |
| ४६ | १८ | भ्रवोर्मध्ये | भ्रुवोर्मध्ये |
| ४८ | २ | मैमव | ममैव |
| ४८ | ५ | धर्मेषु | धर्मेषु |
| ४८ | २१ | यदता | यदक्तो |
| ४८ | २१ | अव्ययमेना | अव्ययमना |
| ५२ | ६ | उपसितव्यं | उपासितव्यं |
| ५२ | १६ | तचर्चि | तत्रार्चि |
| ५५ | २ | पश्यति | पश्यति |
| ५५ | १० | काश्यां | काश्यां |
| ५६ | १८ | प्रयतोभ्मर्च्य | प्रयतोभ्यर्च्य |
| ६० | ६ | जितेन्दिया | जितेन्द्रिया |
| ६० | १७ | घातोः | धातोः |
| ६२ | १७ | मदपितं | मदर्पित |

ॐ

श्रीशिवमस्तु

# श्रीभस्मजाबालोपनिषत्

## विवरणयुता ।

भद्रंकर्णेभिरितिशान्तिः ।

मूलम् । अथ जनकोह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच । भगवन्त्रिपुण्ड्रविधिमनुब्रूहीति । सहोवाच यद्द्रव्यन्तदाग्नेयं भस्म सद्योजातादि पञ्चब्रह्ममन्त्रैः परिगृह्याग्निरितिभस्मेत्यभिमन्त्र्य । मा नस्तोक इति शिरोललाटवक्षस्कन्धेषु धारयित्वा पूतो भवति मोक्षी भवति । शतरुद्रीयजपेन यत्तत्फलमवाप्नोतिस एष भस्म ज्योतिः स एषभस्मज्योतिरिति । सहोवाच याज्ञवल्क्यं किन्तेनफलमिति । तद्भस्मधारणादेव शिवसायु

ज्यमवाप्नोति न स पुनरावर्तते स एष भस्म ज्योतिरिति। तत्र परमहंसानाम संवर्त्तकारूणिक श्वेतकेतु दूर्वास ऋभु निदाघ जडभरत दत्तात्रेयरैवतक भूसुण्ड प्रभृतयो विभूतिधारणदेव मुक्ताः स्युः। स एष भस्म ज्योतिरिति। सहोवाच जनकोह वैदेहो याज्ञवल्क्यं भस्म स्नानेन किं जायत इति। यस्य कस्य चिच्छरीरे यावन्तो रोमकूपास्तावन्तो लिंगानिभूत्वावातिष्ठन्त इति। ब्राह्मणो वा क्षत्रियो वा शूद्रो वा तद्धारणादेव तच्छब्द रूपं परं ब्रह्मयस्यां कस्यान्तनो ह्येवावातिष्ठते। अथ जनकोह वैदेहः पैप्पलादेन सह प्रजापतिलोकं जगाम तंगत्वोवाच। भो प्रजापते त्रिपुण्ड्रस्य महिमानं ब्रूहीति। तं प्रजापतिरब्रवीद्य थैवेश्वरस्य माहात्म्यंतथैवात्रिपुण्ड्रस्य माहात्म्यमिति। अथ पैप्पलादो वैकुण्ठं जगाम तं गत्वोवाच भो विष्णो त्रिपुण्ड्र

स्य माहात्म्यं ब्रूहीति । सहोवाच यथै
वेश्वरस्य माहात्म्यन्तथैव त्रिपुण्ड्रस्य मा
हात्म्यामिति । अथपैप्पलादो भगवन्तं का
लाग्निरुद्रं परिसमेत्योवाच । भगवन्
त्रिपुण्ड्रस्य महात्म्यमनुब्रूहीति । यथैवे
श्वरस्य माहात्म्यन्तथैव त्रिपुण्ड्रस्य मा
हात्म्यामिति । ऋभुनिदाघजडभरत
दत्तात्रेय रैवनक प्रभृतयो भूसुण्डं परिस
मेत्योचुः त्रिपुण्ड्रस्य विधिमनुब्रूहीति ।
भूसुण्डः सहोवाच । त्रिपुण्ड्रविधर्म्मया
वक्तुन्नशक्यते सत्यमिति होवाच । अ
नन्तरन्तानृषीन्नमस्कृत्यावदत् । क्षमध्वं
सर्वेऋषयइति । अथ कालाग्निरुद्रं
श्वेतकेतुर्जाबालो हरिश्चन्द्रः प्रजापति
श्च देवा ऋषयश्च ते परस्परानुवादं कृ
त्वोन्मील्य कालाग्निरुद्रं पृच्छाम इति।
अथ कालाग्निरुद्रं त्रिपुण्ड्रमहिमानं ब्रू
हीति होचुः । देवाश्च ऋषयश्च त्रि
पुण्ड्रस्य माहात्म्यं श्रुणुध्वमिति । अथ भ

स्मछन्न स्संसारान्मुच्यते भस्मशय्याश यानस्तच्छन्दगोचरं शिवसायुज्यमेति। न स पुनरावर्त्तते न स पुनरावर्त्तते। रुद्राध्यायी सन्नमृतत्वञ्च गच्छति स एष भस्म ज्योतिरिति । विभूतिधारणात् ब्रह्मैकत्वं गच्छति स एष भस्म ज्योतिः। विभूतिधारणात्कैवल्यमश्नुतेसएष भस्म ज्योतिः । विभूतिधारणादेव तीर्थे ष्वमृतत्वञ्च गच्छति । स एष भस्म ज्योतिः । यस्य कस्य चिच्छरीरे त्रिपु ण्ड्रस्य लक्ष्म वर्त्तते। प्रथमारेखा प्रजा पति र्द्वितीया विष्णु स्त्रितीया सदाशिव इति स एष भस्म ज्योतिरिति ॥

प्रथमं ब्राह्मणम् ॥

शिवमस्तु ॥

---

## अथ प्रथमब्राह्मणविवरणम् ॥

अथ खलु भगवान्विश्वेश्वरोऽखिलाश्रित प्राणि विमु क्तये ऽविमुक्तेनवरत विरचित सन्निधिर्म्मुमुक्षु बुभुक्षूणामुप

कारायादौ वेदादीन्निश्वासवदभिव्यंजयन्पुनः सर्वोपका राय दयया केवलमाथर्वणी मखिलश्रुतिशिरोभूषणायमानां भस्मजाबाल श्रुतिमणिं प्रकटयन्मुक्तिसुखवदान्यास्स्थिरास नो विराजत इति वेदलोक प्रसिद्धमेव । तामेवश्रुतिं श्रीकाशी समागतानां पूर्वपुण्यवशादामरणवासिनामारब्धा न्तं साधकबाधकबोधाय दयानिधिनान्तर्यामिणा परमेश्वरेण प्रचोदितः शिवानन्दयतिः स्वात्म सुखाय विवरिष्य न्निष्प्रत्यूह प्रचयगमनार्थं शिष्टाचारप्राप्ताभीष्टदेवतास्मृति लक्षणम्मंगलमाचरति भातीत्यादिना । "भातियत्सर्व रूपेण रक्षकश्चाघ भक्षकम् । अविमुक्तेशमात्मानमाश्रये बन्धमुक्तये ॥" अस्यार्थः । यत्सर्वाधारमतएव सर्व रक्षकं अज्ञजनकृताघकुलस्यचभक्षकं पापसमूहविनिवर्त्त कमिति । यत्ब्रह्म सर्वरूपेण विभाति । तमेवाविमुक्तेशं श्रीविश्वनाथमात्मानं बन्धमुक्तये समाश्रये सम्यगालंब इत्यर्थः । अत्र रक्षकमघभक्षकमिति पदद्वयेनाद्वैतपरब्रह्म शिवस्वरूपं शिवज्ञानसाधनं भस्मचव्यंजितम् । श्रु । "भास नाद्भसितं प्रोक्तं भस्मकल्मष भक्षणात् । भूति र्भूतिकरी पुंसां रक्षा रक्षाकरीसदा" इति श्रुतेः । आत्मानमिति पदेन सर्वप्रत्यग्वस्तु स्वरूपमविमुक्तेशमित्यखिलमूला चार्य्य उक्तः । अतश्चाद्वैतशिवानन्दमेव संस्मृतम् । एवं भूतं शिव मेव सर्वरूपेण वियदादिमहाभूतभौतिकक्षेत्रज्ञभेदेन भा तीति । अमुमेवार्थमन्ततो वक्ष्यति च । अत्रवक्ष्यमाण श्रुत्यर्थविचारे मुमुक्षु र्द्विजो ऽधिकारी । काशीनिवास नैयमधर्म्मविवेको विषयः । प्रयोजनमाविद्यकबन्धमु

क्तिः । शास्त्रस्योक्तार्थे प्रतिपादनरूपः संबन्धः । अस्या भस्म जाबालश्रुतेः । भद्रंकर्णेभिरिति शान्तिर्वक्तव्या ।

अथ जनको हवैदेह इत्याद्येकत्रिंशद्वाक्यानि। विवरिष्यंते जनकोनाम राजर्षिः । वैदेहो विदेह विषयाधिपः । अथवा देहादावहम्ममेदमित्यभिमानरहितो वा । हवै प्रसिद्धार्थे वाचकौ । याज्ञवल्क्यं गुरुं यथाशास्त्र मुपसंगम्य त्रिपुण्ड्र विधिमनुब्रूहीतिहोवाच । त्रिरेखात्मकं तिर्यक्त्रिपुण्ड्रंयत्त स्यविधिं श्रौतमनुसृत्यब्रूहुचपदिशेति प्रश्नः । अथाचार्यः। अयन्तु जनको वैदिक एवातो वैदिकं भस्म तिर्य्यक् त्रिपुण्ड्रमेवापृच्छदिति मत्वा विधिशब्दस्य सर्वार्थगार्भितत्वात् । अन्यस्य तान्त्रिकपुण्ड्रस्यात्रानवकाशात्तदस्मै स्पष्टं वक्ष्यामीत्याह । यद्द्रव्यन्तदाग्नेयं भस्मेति । अग्निनैव दग्धमाग्नेयं भस्म । नहि सुचिरातपादिदग्धमित्यर्थः । नन्वेवमप्यविस्पष्टमेवोपदिष्टम् । कुतः । अग्निदाह्यमिन्धनमिदमितिनोक्तमिति चेन्न । तत्सर्वमुपर्यस्यामेव श्रुतौ वक्ष्यति विस्तरात् प्रागुदयादित्यादिना। तद्भस्म सद्योजातादि पञ्चब्रह्ममन्त्रैः सद्योजातवामदेवाघोरतत्पुरुषेशानमन्त्रैः समुद्गक भस्म्यादि पात्रेभ्यः परिगृह्य गृहीत्वा अग्निरितिभस्मेत्यादिमन्त्रैरभिमन्त्र्य । मानस्तोकइति शिरआदिपञ्चस्थानेषु धृत्वा त्रिपुण्ड्रं कुर्वन्पूतो भवति सर्वकर्मयोग्योभवतीत्यर्थः । किंच मोक्षी भवति स एव मोक्षे शिवज्ञाने शिवध्याने प्रायश्चित्ते चाधिकारी भवति । तथा च श्रुतयः । तेषामेवैतां ब्रह्मविद्यां वदेतशिरोव्रतं विधिवद्यैस्तु चीर्णमिति । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषि संघजुष्टमिति। भूत्वैन

प्रमादितव्यमिति । तस्माद्भस्मधारणादेव मोक्षाधिकारी त्यर्थः अपिच शतरुद्रीयजपेन यत्फलमवाप्नोति तच्चाप्नोति। किन्तत्मोक्षफल मित्यर्थः । श्रूयते हि अथ हैनं ब्रह्मचारिण ऊचुः किंजप्येनामृतत्वं ब्रूहीति सहोवाच याज्ञवल्क्यः शतरुद्रीयेणेति । एतानि हवा अमृतस्यनामधेयानि भव न्त्येतैर्हवा अमृतो भवतीति मोक्षीभवतीत्युक्तमेवार्थ मत्थान्तरेण व्यंजितं भवति । शतंरुद्रा अस्मिन्नमस्ते इत्या द्येकादशानुवाकात्मके मन्त्रे प्रतिपाद्यन्त इति । यद्वा अस्य मन्त्रस्य यजुषि शतशाखास्वपि व्यापकत्वाद्वा शतरुद्रीय मित्यर्थः । स एष भस्मज्योतिः सोयं यथोक्तभस्म त्रिपु ण्ड्रधृक् अहमिदमात्मना सर्वतोभासमानं भस्माख्यंचि ज्ज्योतिरेव भवतीति शेषः । तद्भस्मधारणादेव सर्वप्रति बन्धकनिवृत्तिद्वारा शिवसायुज्यं शिवज्योतिष्येकीभाव माप्नोति न स पुनरावर्त्तते जन्मभूमिं । स एष भस्म ज्योतिरित्युक्तार्थः । अस्मिन्नर्थे उदाह्रियन्ते पुरुषसि ह्माः । तत्र परमहंसानामसंवर्त्तकारुणिकश्वेतकेतुदूर्वास ऋभुनिदाघजडभरतदत्तात्रेयरैवतकभूसुण्डप्रभृतयोपिभूतिधा रणदेव मुक्ता स्युः । छन्दसि कालानियमान्मुक्ता अभवन्नित्यर्थः । अथ भस्मस्नानेन किंजायत इति प्रश्न स्योत्तरं यस्य कस्यचित् ब्राह्मणस्यान्त्यजस्य वा शरीरं यावन्तो रोमकूपा रोमोत्पत्ति स्थानानि तावन्तो लिंगानि महालिङ्गवत्सर्वपूज्यानि भूत्वा तिष्ठन्ते । तद्भस्म धारणा देव तच्छब्दलक्ष्यं ब्रह्म तस्य तस्य तनाववतिष्ठते । अथ जनकादिप्रश्नः । भो प्रजापते त्रिपुण्ड्रमहिमानं ब्रूही

ति तत्राह । अभिधावृत्याख्यातुमशक्यत्वात् ब्रह्मस्वरूप त्वात् भस्मनः तस्य तु स्वमहिमप्रतिष्ठितत्वश्रुतेः । यथै वेश्वरस्य माहात्म्यन्तथैव त्रिपुण्ड्रस्य माहात्म्यमित्युक्तं युक्तमेव । एवमेवोपर्य्यप्यनुसन्धेयम् । अथ भूसुण्डस्त्रि पुण्ड्रविधिजिज्ञासून्मुनीन्नमस्कृत्येदमाह वस्तुतस्तद्वक्तु न्नशक्नोमि तत् क्षमध्वमित्यवदत् । अथ कालाग्निरुद्रं श्वेतकेतुमुखास्त्रिपुण्ड्रमाहात्म्यं पप्रच्छुः । सचतान् श्रुणु ध्वमित्यभिमुखीकृत्याह । पूर्ववद्रुद्रोपि वक्ष्यतियदि भूतिमहिमा प्रच्छन्नो भवेदिति किञ्चिदिवोपदेष्टु मार भते । अथ भस्मच्छन्नइति भस्मना सर्वांगोद्धुलनेनाच्छा दित लोमकेशस्थान इति । स तु संसाराज्जननमरणस्म रणान्मुच्यते । भस्म शय्याशयानः । द्वादशमासषड्रात्रा दि दीक्षानियमेन पाशविच्छेदन शिवसंकल्पादिमन्त्रपुर स्सरं भस्म शय्यामारुह्य तत्र च शयानस्सुकृती तच्छब्द गोचरं शिवं सायुज्यमेति । तत्र स्थित्वा तथाभूतस्सन्रुद्रा ध्यायी च सन्नमृतत्वंमोक्षञ्च गच्छति । तथा च स्मृतिः । " स्तेयं कृत्वा गुरु दारांश्च गत्वा मद्यं पीत्वा ब्रह्महत्यां च कृत्वा भस्मच्छन्नो भस्म शय्याशयानो रुद्राध्यायो मुच्यते सर्व पापैरिति ।" ततश्च विभूति धारणात् ब्रह्मैकत्वं केवली भावञ्च गच्छति । किंच तदूर्ध्वगति वैशिष्ट्यं सर्व प्रत्यक्षमेव भवती त्याह । तस्य भस्मनो नियमधारणादेव तीर्थेषु श्रीकाश्यादिशिवस्थानेषु बुद्धिपूर्वमबुद्धिपूर्वं वा मृतिं प्राप्य तदनुशिवमन्त्रतारकोपदेशावाप्तया अमृतत्व ञ्च गच्छति कुत एतदवगम्यत इत्यत्राह । यस्य कस्य

चित् भूतिधारिणः फाले । तद्भस्म तिर्य्यक्त्रिपुण्ड्र लक्ष्म वर्त्तते रेखा रूप तोवभासते । सा प्रथमा अधस्तात् स्थिता रेखा प्रजापति र्भवति द्वितीया विष्णु स्त्रितीया सदाशिव इति । सकल मूल भूत देवत्रय नियम धारणा त्तत्समुदाय मात्मचैतन्य मेवाहमस्मीति भावनातिशयात् पूर्वोक्ता मुक्तिर्य्युक्ततरेत्यवग ते । इति भस्म जाबाल श्रुतौ

प्रथम ब्राह्मण विवरणम् ॥

शिव मस्तु ।

---

मूलम् । अथ जाबालोभूसुण्डः कैलासशिखरावासमोंकारस्वरूपिणम्महादेवमुमादेहार्धधारिणं हरिविरिंचिपुरन्दरमुखसुरसेवितं स्तूयमानमनन्तैरपि वेदैः मूर्तिधरैः सोमार्धकृतशेखरं सोमसूर्याग्निनयनमनन्तेन्दुरविप्रभं व्याघ्रचर्मपरिधानं भस्मोद्धूलितविग्रहं तिर्यक्त्रिपुण्ड्ररेखाविराजमानफालंमन्दस्मितपूर्णपंचविधपंचाननं वीरासनारूढमप्रमेयमनाद्यन्तं निष्कलन्निर्गुणं शांतमनामयं हुंफट्पूर्वकशिवनामानि समुच्चर

न्तं दुर्निरीक्ष्यं हिरण्यबाहुंहिरण्यवर्णं हिरण्यनिधिमद्वैतं चतुर्थमाशास्यं भगवन्तं शिवंप्रणम्य मुहुर्मुहुरभ्यर्च्य श्रीफलदलैस्सितेनभस्मनानतोत्तमांगः कृतांजलिपुटः पप्रच्छ। अधीहि भगवन् वेदसारमुद्धृत्यत्रिपुण्ड्रविधिं यस्मादन्यानपेक्षमेव मोक्षोपलब्धिः किं भस्मनो द्रव्यं कतिस्थानानिमनवोस्यके वा कदा वा तस्यधारणं केत्रात्राधिकारिणो नियमास्तेषां केवामामन्तेवासिनमनुशासय मोक्षायेति ॥ इति भस्म जाबालश्रुतौ द्वितीय ब्राह्मणम् ॥ शिवमस्तु ॥

---

## अथ द्वितीयब्राह्मणविवरणमारभ्यते ॥

अथ भूसुण्डः कैलासशिखरावास मित्यादि षोडश वाक्य स्यार्थः। कैलास इति अस्य गिरेः केशिरसि शिखरे हरस्य लासो लास्यं सदा विराजतइति कैलास स्स एव कैलासः। कंजलमिलाभूमिस्तयोर्योगेनासनं स्थितिरस्मिन्निति वा। केलीनां समूहः कैलः केपिकृतिनः कैलेन केलीसमूहेनाकल्पमत्रासतइतिवा। यच्छिवस्थानं प्रलयेप्यविनाशी आसकिलेतिपुराणं यत्किलासमहाकल्पेष्व

त्यद्भुतमनामयम् । तत्कैलासपदं प्राहुश्शिवतत्वविदोज
ना इति । एतादृशे कैलासशिखरे वसतीति तथोक्तम्
ओंकार स्वरूपिणं ओंकार एव स्वरूपमस्ये त्योंकार स्वरू
पिणं श्रु " प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् ।
तस्य वाचकः प्रणव" इति पातञ्जलं सूत्रम् । अथ एवा
थर्वशीर्षे महादेव महेश्वरादिशब्दैस्सह प्रणवोंकारादि
शब्दास्समाम्नाताः मन्दस्मितपूर्णपंचविधपञ्चाननम् ।
मन्दमल्पं स्मितं मन्दस्मितं तेन पूर्णानि पञ्च विधानी
शानतत्पुरुषाघोरवामदेवसद्योजाताख्यानि विविध वर्णा
न्याननान्यस्येति तथोक्तम् । वीरासनारूढं तदासन
लक्षणमुच्यते । " दक्षिणेतरगुल्फन्तु दक्षिणोरुणिवि
न्यसेत् । वीरासनं भवेदेतदृजुकायस्य वैमुनेरिति ।
अत्रासनेयं विशेषः । दारुकावनमुनिजनविरचिता
भिचारानलसंभूतापस्मारगलनियन्त्रितदक्षिणचरणकमलम् ।
तदुपरि चतुर्विंशत्यंगुलोन्नतविद्या कमल पीठोपर्यलं
कृतवामपादकमलञ्च निधायेति यावत् । अप्रमेयं
मेयस्य शिवस्य प्रमातृ स्वरूपत्वादिति भावः । अनाद्यन्तं ।
श्रु । "अथ कस्मादुच्यतेनन्तः यस्मादुच्चार्यमाणएवाद्यन्तन्नो
पलभ्यते तिर्यगूर्ध्वमध स्तस्मादुच्यतेनन्त " इति । "अजा
त इत्येवं कश्चिद्भीरुः प्रपद्यत " इति । " निष्कलं निर्ग
ताः प्राणाद्याः षोडशकलाअस्मादिति । " दुर्निरीक्ष्यं
सर्वस्येक्षणस्यापीक्षणशक्तिप्रदातरि जगच्चक्षुषिरवावपि
चक्षुरीक्षितुन्नोत्सहते । येन सूर्यस्तपति तेज सेद्ध "
इति । " तस्य भासा सर्वमिदंविभातीतिचश्रुतेः " ।

सर्व विभासकस्य परं ज्योतिषः परमेश्वरस्य दुर्निरीक्ष्य त्वेकः प्रष्टव्यः। निर्गुणं गुणत्रयातीतं शान्तन्निर्द्वन्द्वम् । अनामयम् । आमीनातीत्यामयः मीङ्हिंसायां न विद्यते आमयोस्येत्यनामयं नित्य सुखमित्यर्थः । हुंफट् पूर्वक शिव नामान्यु च्चरन्तं हुमिति स्तंभन मन्त्रः । फडित्युच्चाटने तेन स्तंभनेन मन्त्रेण स्वाश्रिताविमुक्तनियतवासिनो जीव राशेः प्रारब्धदुष्कर्माण्यपि देवस्स्तंभयतीत्यवगम्यते । स्तंभनप्रतिबद्धस्य सर्पादेर्निश्शक्तिकत्वापत्तेः । यथाविदेह मुक्तस्य गलपिलकादि रोगः पर दृष्ट्या प्रतीयते नात्मदृष्टैः तद्वत् स्वजनप्रारब्धदुष्कर्मफलानि हुमिति स्तंभयती त्यर्थः । आगामिसंचिते कर्मणी फडित्युच्चाटयतीत्यव गम्यते । यस्येच्छामात्रेण सकलभुवनपञ्चकृत्यं नित्यं सत्यव द्विवर्त्तते । तस्य मन्त्रतः फलाभावेपि मन्त्रमहिम प्रकटनाय साधकानुग्रहायवाजपति शिवनामानि । उक्तं हि " विद्यासु श्रुति रुत्कृष्टा रुद्रैकादशिनी ततः । ततः पञ्चाक्षरी मन्त्र शिव इत्यक्षर द्वयमिति " वचनात्सर्व मन्त्र सारिष्ठतया साधकानुग्रहाय समुच्चरन्तं हिरण्य बाहुंश्रु "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्य पतयेंबिकापतयउमापतये पशुपतये नमोनम " इति तैत्त रीये । हिरण्यश्मश्रुरित्यादि श्छान्दोग्ये । " अद्वैतं एक एव रुद्रो न द्वितीयाय तस्थे " इति । चतुर्थं विश्व तैजस प्राज्ञवैश्वानरहिरण्यगर्भान्तर्यामित्वाद्युपाधिविरहं आशास्यं सर्वं प्रत्यगात्मत्वात्परमेश्वर स्सर्वै राशास्यते । भगवन्तमैश्वर्यादिषट्गुण संपन्नं श्रीमहादेवं शिवं प्रणम्य

श्रीफलदलैः मालूर श्रीफलावपीतिनिखण्डुः। बिल्वदलै मुहुर्मुहुः सहस्र नामभिः सितेनभस्मनाचाभ्यर्च्य गङ्गोदहिमांबु कर्प्पूर मृगमद मिलित बिल्वैरभ्यर्च्य नतोत्तमाङ्गः।शिरसा नत्वा कृताञ्चलिः पप्रच्छ। कथमधीहि भगवन्त्रिपुण्ड्र विधि मध्यापय। यस्मादन्यानपेक्षमेव मोक्षोपलब्धिर्भवेत् विविधकर्माण्युपायान्तराणिचानपेक्ष्य यस्मात्त्रिपुण्ड्रधारणादेव मोक्षोपलब्धिर्भवेत्। तं पुण्ड्रविधिमधीहीति पूर्वेण संबद्ध्यते। किं भस्मनो द्रव्यं कतिस्थानानि देहे धारणयोग्यानि कतिवांगानि तद्धारणे कीदृशामनवो विधीयन्ते। कदा वा तद्भस्मधारणकालः के वात्रभूतिधारणे अधिकारिणः तेषां भूतिधारिणां केवानियमाः। एवं षड्विधप्रश्नस्योत्तरेण मामन्ते वासिनमनुशासयाज्ञापय किमर्त्थम्मोक्ष सुखायेति। इति शब्दः प्रश्नपरिसमाप्ति द्योतनार्त्थः। स्पष्टमन्यत्॥

इति भस्मजाबाल श्रुतौद्वितीय ब्राह्मण विवरणम्।

शिव मस्तु।

---

मू ।अथोवाचभगवान्सदाशिवः परमकारुणिकः प्रमथान्सुरानपिसमवेक्ष्य।

विवरणम्।

अथैवमधस्तात् भूसुण्डमहर्षिणा सज्जनोपकृतये षड्वि

धप्रश्ना उद्घाटिताः । तदुत्तरं वक्तुकामो भगवान् सदा शिवः परमकारुणिकस्सन् सुरान्मनुष्येभ्योतिशयेन सुर न्ति दीव्यन्तीति सुरान् प्रमथान् प्रकर्षेणमथ्नन्ति दुर्ज्जनानि ति प्रमथास्तान् समस्तानपिशब्देन साक्षात्पृष्टा भूसुण्ड महर्षिश्चावगम्यते । तान् सर्वानपि समवेक्ष्य किमर्थमीक्षण मित्यत्रोच्यते । वक्ष्यमाण शिवज्ञानमुख्यसाधनीभूतभूति संपादनादिधर्मविशदबोधाय साधकप्रतिबन्धनिवृत्त्यर्थञ्च चाक्षुष्यादीक्षया दीक्षित्वेतिभावः । सर्वस्रष्टुरपि पारमे श्वरदीक्षाश्रुत्या दर्शिता। "यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै । तगूंहदेव मात्मबुद्धिप्रकाशम्मुमुक्षुर्वै शरणमहंप्रपद्ये । हिरण्यगर्भं पश्यति जायमानमितिच । चक्षु रुन्मील्य यस्तत्वं ध्यात्वा शिष्यं समीक्षयेदितिगीर्वाणेन्द्र विर चितमन्त्रशास्त्रे तस्मात्परमगुरुस्तानभिमुखीकृत्य प्रथमं भूति संपादनप्रकारमुपादिशति प्रागित्यादिना ॥

मू ।पूतं प्रागुदयात् गोमयं ब्रह्मपर्णे निधाय त्र्यंबकमितिमन्त्रेण शोधयेत् ततो येनकेनापि तेजसाशोषयेत्स्वगृह्यो क्तमार्गेणाग्निं प्रतिष्ठाप्य तद्गोमयद्रव्य न्निधाय सोमायस्वाहेति मन्त्रेण तिलव्री हिभिस्साज्यैर्जुहुयादष्टोत्तरसहस्रं सार्ध मेतद्वा ॥

## विवरणम् ।

सूर्योदयात्प्राक् गवामुत्थानसमय एव पूतंचेलोच्छिष्टवि ट्भक्षणविमुखानां गवां तृणचणकादिग्रासपरिणतंगोमयं "गो श्वपुरीषइति सूत्रान्मयट्प्रत्ययः । तत् ब्रह्मपर्णे पलाशपर्णे निधायखस्थं विशुद्धदेशपतितं वा समादाय पलाशपर्णादौ विन्यस्येति । त्र्यंबकमितिमन्त्रेण शोधयेत् तन्निष्ठशिलाली ष्ठकेशादीन्परिशोध्य वर्जयेत् । ततः पिण्डान् कृत्वा येनके नापि तेजसा सूर्यातपकपालतापादिनावेति शोषयेत् । तत स्सुमूहूर्त्ते चतुर्दश पिण्डानपरिमितान्वा स्वसूत्रविधिना प्रतिष्ठतेग्नौ सोमायस्वाहेति निधाय हुत्वा ततस्साज्यैराज्य प्लुतैस्तिलसमतुलितयवैर्वा आहोस्विद्व्रीहिभिरष्टोत्तरसहस्र संख्याकंवा एतत्सहस्रं सार्धपंचशताधिकंवा जुहुयादित्यर्थः॥

मू ॥तत्राज्यस्य पर्णमयीजुहूर्भवाति । तेन पापंश्रणाति। तद्धोमेमन्त्रस्त्र्यंबकमि त्येवान्ते स्विष्टकृत्पूर्णाहुतीः । तेनैवाष्ट दिक्षु बलिन्दत्वा तद्भस्म गायत्र्या संप्रो क्ष्य तद्धेमेराजते ताम्रेमृण्मयेवा पात्रे नि धाय । रुद्रमन्त्रैःपुनरभ्युक्ष्य शुद्धदेशे सं स्थापयेत्।ततोभोजयेद्ब्राह्मणान्स्वयं पू तो भवति ॥

## विवरणम् ।

तत्रेति । तत्रहोमे आज्यस्य घृतस्य जुहू होमसाधनं पर्णमयी पलाशमयी भवती भवेत् तेनपलाशहोमसाधनेन पापं कर्त्तृनिष्ठं श्रणाति हिंसति नाशयतीत्यर्थः । तद्धोमेति तत्रीहिहोमे त्र्यंबकमित्येव त्र्यंबकमंत्रेणैव विहित संख्या आहुतीर्जुहुयात् । ततः स्विष्टकृत् पूर्णाहुतीश्च जुहुयादिति शेषः । ततस्तेनैव त्र्यंबकमंत्रेणाष्टदिक्षु बलिं विघ्नेश्वरप्रीणनार्थं दद्यात् । तदितिप्रागुदयादित्यादिना बलिदानान्तेन विधिना संपादितं तद्भस्मगायत्र्याभिमंत्र्य । यद्वात द्भसितं भस्मगायत्र्यावक्ष्यमाणया सद्योजातायविद्महे महादेवाय धीमहि तन्नोघोरः प्रचोदयात् इत्यनया संप्रोक्ष्य सौवर्णादि पात्रे निधाय पुनश्चरुद्रमन्त्रैर्नमस्ते इत्यादि मन्त्रैस्तं वोजंभेद्धामीत्यन्तैः संप्रोक्ष्य शुद्धदेशे संस्थापयेत्ततो भोजयेत् स्वयं पूतोभवति । एवं गोमयग्रहणप्रभृति ब्राह्मणतर्पण पर्यन्तोक्तभस्मसंपादनं यःकुरुते सस्वयं पूतोभवतीत्यर्थः ॥

मू ॥मानस्तोकइति सद्योजातमिति पञ्चब्रह्ममन्त्रैर्भस्मसंगृह्य अग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभस्म ऋषयो भस्म देवा भस्म वेदाभस्म सर्वंह्यवाइदं भस्म पूतन्नमामि सद्यस्समस्त।घनाशकमितिशिरसाभि

नम्य पूतेवामहस्तेवामदेवायेति संस्थाप्य त्र्यंबकमिति संप्रोक्ष्य। शुद्धंशुद्धेनेति सम्मर्दयतेनैव संशोध्यापादमस्तकमुद्धूलयेत्। तत्रपञ्चब्रह्ममन्त्राः ॥

विवरणम् ।

मानस्तोक इत्येकःसद्योजातादि पञ्चमन्त्रास्तैस्संगृह्य भस्मगृहीत्वा। अग्निरितिभस्म अग्निरितिभूमौ तेजोमयं यत् वस्तुवत् भाति तत्स्मृतमात्रेण सर्वाघनाशनं परचैतन्यम्महत् भस्मैव अन्यस्यभानं कुतस्तस्मात्परंब्रह्मैवेत्यर्थः। अग्निरुत्कर्षभावं स्वाराधकान्यायजूकान्नयतीतिवा । सर्वेषामग्रे स्वयं गच्छतीत्यग्निः। स्वाश्रितं सर्वं वस्तु अग्रमवसानन्नाशन्नयतीत्यग्निः। एवं व्युत्पत्याप्यग्निर्महाभस्मब्रह्मैव अग्न्यादीनान्तेजो बन्नकार्यत्वात्तेषामपि सत्कार्यत्वात्। श्रूयतेहि। यदग्नेरोहितं रूपन्तेजसस्तद्रूपं यच्छुक्लन्तदपां यत्कृष्णन्तदन्नस्य अपागाद् ग्नेरग्नित्वं वाचारंभणं विकारोनामधेयन्त्रीणि रूपाणीत्येव सत्यमित्यादि। एवं वानात् गंधनाद्वावायुर्उच्यते सोपिब्रह्म सधर्मतया भासमानत्वाद्वाय्वाख्यं यत्तच्च शिवचैतन्यं महाभस्मैव। जलमितियत् जल तीतिजलंजल अपवारणे पचाद्यच् तच्चभस्मैव स्थलं सर्वस्य स्थितिंलाति ददातीति स्थलं इतियद्भातितस्याप्यधिष्ठानब्रह्म ण एव सर्वस्थितिदातृत्वशक्तेः। व्योमव्ययतीति व्योमव्येञ् संवरणे नामन्सीमन्नित्यादिना मन्नंतं निपातितम्। सर्वतस्सुषिरं

व्योमसर्वावकाश दातृत्वेनयद्व भासतेतच्च भस्माख्यं ब्रह्मै व सर्वाधारात् ब्रह्मणो ऽन्यत्र सर्वावकाशदा तृत्वन्नकस्यापि भवतीति भावः। ततश्चसर्वं हवा इदं भस्म हवैप्रसिद्धवाचकौ दृश्यमानमिदं सर्वं दृश्यं भस्मैव ऋषयो देवावेदाश्चेति यत्त त्सर्वं भस्मैवेत्यर्थः। श्रु। "आत्मा वाइदमेक एवाग्रआसी न्नान्यत् किंचनमिषत्।" इदं सर्वं यदयमात्मेति। न्याय श्च। यत्सत्तद्भाति यन्नभातितदसत्। एवंचाग्न्यादिभिन्नारो पात्मनाविवर्त्तमानस्य सर्वस्य सर्वाधिष्ठानं सर्वावभासकं भ स्मैवेतिभावः। एवमभिमंत्रितमत एवपूतं सद्यस्समस्ताघना शकं भस्मनमामीति शिरसाभिनम्य पूतेवामहस्ते स्नानादि संस्कृतस्यापिवामहस्तस्य गुद गुह्यकण्डूयनादिनामालिन्यंभ वेत् तच्छुद्धिः कार्या। वामदेवायेति भस्म संस्थाप्य त्र्यबं कमंत्रेण संप्रोक्ष्य उक्ष सेचन इतिधातोः जलेनसंसिच्यशुद्धं शुद्धेनसाम्नेतिसंम्मर्द्यतेनैवपुरो क्तऋचासंशोध्यशिलादिपरि त्यज्यआपादमस्तकमुद्धूलयेत्। आशिरःपादमित्यर्थः यद्यन्य थाश्रुत्यन्तरव्याकोपस्तर्हिप्रक्रान्तश्रुतिविरोधइतिचेन्न। ईशा नेनशिरोदशम्मुखन्तत्पुरुषेणत्विति ब्रहज्जाबालेविशिष्यस्था नादिनिर्णयदर्शनात् निर्विशेषात्सविशेषवाक्यस्यप्राबल्यात् शिरआदिक्रमेणैवोद्धूलनंकार्यमित्यर्थः। तत्रोद्धूलनेपंचब्रह्म मन्त्राउपयुज्यन्तइतिशेषः॥

मू॥ ततः शेषस्य भस्मनो विनि योगः। तर्जनीमध्यमानामिकाभिरग्नेर्भ

स्मासीति संगृह्य । मूर्द्धानमिति मूर्द्धनिन्य
सेत् ।त्र्यंबकमितिललाटे नीलग्रीवायेति
कण्ठे । तद्दक्षिणेत्र्यायुषमिति । तद्वामे
वामदेवायेति । कपोलयोः कालायेति ।
नेत्रयोस्त्रिलोचनायेति । श्रोत्रयोःश्रृणुवा
मेति। वक्त्रेप्रब्रुवामेति ।हृदयेआत्मनइति
नाभौनाभानाभिन्न इति । दक्षिणभुज
मूले भवायेति । तन्मध्येरुद्रायेति । तन्म
णिबन्धे मृडायेति । तत्करपृष्ठेपशुपतय
इति । वामबाहुमूलेउग्रायेति।तन्मध्येऽग्रेव
धायेति ।तन्मणिबन्धेदूरेवधायेति ।तत्कर
पृष्ठेनमोहन्त्रेइति ॥ अंसयोःशंकरायेति।
यथाक्रमंभस्म धृत्वासोमायेतिशिवन्नत्वात
तःप्रक्षाल्यकरौ । तज्जलमापःपुनन्त्विति
पि बेन्नाधस्त्याज्यन्नाधस्त्याज्यं एवंप्रातर्म
ध्याह्नसायन्तनेपिकालेविधिवत् भस्मधार
णमप्रमादेनकार्यम् । प्रमादात्त्यक्त्वापति
तोभवेत् । ब्राह्मणानामयमेवधर्मोऽयमेव
धर्म्मः ॥

# विवर्णम् ॥

ततःशेषस्यभस्मपुष्ट्यर्थंन्तरस्याविनियोगउच्यतइतिशेषः।
कथंप्रसिद्धाभिस्तर्जनीमध्यमानामिकांगुलीभिः अग्नेर्भस्मासी
तिसंगृह्यमूर्द्धानन्दिवइतिमन्त्रेणमूर्ध्नि भस्मतिर्यक्त्रिपुण्ड्रंन्य
सेत् । पुडिखण्डनेइतिधातोः रत्प्रत्ययेपुण्ड्रमिति।प्रत्यंगंखण्ड
शस्तिर्यक् रेखात्मनाप्रतीयमानत्वात्त्रिपुण्ड्रमित्यर्थः।कतिस्था
नानिमनवोस्य केवेतिप्रश्नद्वयस्ययुगपदेवोत्तरन्ददातिदेवः
त्र्यंबकमितिललाटे लल विलासेइति धातोराटच्प्रत्ययः ।
कणतीतिकण्ठः कणशब्दे नाभौनाभानाभिन्न इतिमन्त्रः ।
नह्यन्तेबध्यन्तेसर्वानाड्योऽत्रेतिनाभिः।मन्त्रःऋग्वेदे नाभा
नाभिन्नआददेचक्षुश्चित्सूर्येसचा। कवेरपत्यमाहुहे आहत्य
चतुर्विंशत्यंगानिविंशतिमन्त्राश्चासन् । अन्यत्स्पष्टम् । यथा
श्रुतंत्रिपुण्ड्रंकृत्वासोमायनमइति शिरोविनम्य । अथप्रश्नो
पक्रमानुरोधेन तद्धारणकालस्य तदधिकारिणाञ्च वक्तव्य
त्वेपितन्नियमानांबहुत्वेन प्राबल्यादनतिक्रमणीयत्वाच्च
कश्चिदत्रनियमउच्यते । ततोभूतिधारणानन्तरंहस्तौसंप्र
दायक्रमेणप्रक्षाल्यतज्जलमापःपुनन्त्वितिमन्त्रेणपिबेदयमेको-
नियमः। नाधस्त्याज्यन्नाधस्त्याज्यमितिवीप्सयाअयमपि
कश्चिन्नियमः। यथाश्मकुट्टनात्तण्डुलनिष्पत्तौसत्यामप्य
वहननमेवनियम्यते । यथावातिष्ठतश्शयानस्यवाशनंकुर्वतः
क्षुण्णिवृत्तौ सत्यामपिप्राङ्मुखान्नानिभुंजीतेतिनियम्यते ।
एवमत्रापिमन्त्रावयवादिनियमास्सन्त्येव । ततश्चतज्जलं
पिबेदितिशास्यतेततस्तत्पिबेदेव । नाधस्त्याज्यमितिद्विरु

क्त्वानकदापित्याज्यमेव । अथभूतिधारण कालविशेषमाह। एवं प्रातर्मध्यान्हसायान्हेषु त्रिकालेषुसर्वदेत्यर्थः । सर्वधर्मा ङ्गतयावश्यं भस्मोद्धूलनतिर्यक्त्रिपुण्ड्रंधार्यमेव । अपिशब्दे नसार्वकालिकमित्यवगम्मते । अपिचमलमूत्रोत्सर्गनीचभाष णादिप्रसंगे । उद्धूलनादिविहितं बृहज्जावालैः गुणोपसंहार न्यायेन तदत्रविलिख्यते । सुप्त्वाभुक्त्वापयःपीत्वा कृत्वा चावश्यकादिकं । स्त्रियन्नपुंसकंगृध्रंबिडालंबकमूषिकम् । स्पृष्ट्वातथाविधानन्यान्भस्मस्नानंसमाचरेत् । देवाग्निगुरुवृ द्धानां समीपेन्त्यजदर्शने । अशुद्धभूतलेमार्गेकुर्यान्नोद्धूलनंव्र तीति । सदाभसितच्छन्नसर्वांगः पाशुपतव्रतशीलइत्यर्थः । एवंसदाप्यप्रमादेन भस्मधार्यमितिचानियमः । यदकरणेप्रत्य वैतीतिप्रश्नस्योत्तरम् । प्रमादात्भस्मधारणं सकृदपिकर्मविशे षेत्यक्त्वा पतितोभवेत् । ब्राह्मणानामयमेवधर्मोयमेवधर्मइति वीप्सावधारणाभ्यान्नियम्यते ॥

मू ॥एवंभस्मधारणमकृत्वानाश्नीया दपोन्नमन्यद्वा।प्रमादा त्त्यक्त्वाभस्मधारण मिदन्न गायत्रींजपेत् । नाग्नौ जुहुयान्न तर्पयेद्देवानृषीन् पितृन्वाअयमेवधर्मस्स नातनोयमेव धर्मस्सनातनस्सर्वपापनाश कोमोक्षकोमोक्षहेतुः । नित्योयंधर्मोहिब्रा ह्मणानांब्रह्मचारिगृहिवानप्रस्थयतीनाम् ।

एतदकरणेप्रत्यवैति । अकृत्वाप्रमादेनैक
दाष्टोत्तरसहस्रगायत्रीं जलमध्येजपित्वो
पोषणेनैकेनशुद्धोभवति । यतिस्त्यक्त्वैक
दाभस्मधारणमुपोष्यद्वादश सहस्रप्रणवं
जप्त्वाशुद्धोभवति । अन्यथेन्द्रोयतीन्
सालावृकेभ्यःपातयाति । भस्मनोऽस्ययद्य
भावस्तदानर्थभस्मदावानलजमन्यद्वाव -
श्यम्मन्त्रपूतंधार्यम्॥एतत्प्रातःप्रयुंजानो
रात्रिकृतात्पापात्प्रमुच्यते एतन्मध्यंदिने
माध्यान्हिकोपस्थानान्तमादित्याभिमुखो
धीयानः सुरापानात्पूतोभवति स्वर्णस्ते
यात्पूतोभवति गुरुदार गमनात्पूतोभ-
वति ब्रह्मवधात्पूतोभवति गोवधात्पूतो
भवति स्त्रीबधात्पुतोभवति अश्ववधात्पू
तोभवति गुरुवधात्पूतोभवति मातृवधा
त्पूतोभवति पितृवधात्पूतोभवति त्रिका
लमेतत्प्रयुंजानस्सर्ववेदपारायण फलम
वाप्नोति सर्वतीर्थफलमश्नुते अनुपद्रुत
स्सर्वमायुरेति विन्दतेप्राजापत्यं रायस्पो

षंगोपत्यं एवमावर्तयेदुपनिषदमेवमावर्त येदित्याह भगवान् सांबसदाशिवः ॥

इतिभस्मजाबालश्रुतौ तृतीयंब्राह्मण ।

शिवमस्तु ॥

---

## विवरणम् ॥

एवंभस्मधारणमकृत्वा नाश्नीयादपोन्नमन्यद्वा । अयमपिनियमः। एतत्त्यक्त्वानगायत्रीं गायतोजपतोद्विजान् त्रायतइतिगायत्रीतान्नजपेत् । गायत्रीग्रहणंस र्वमन्त्रोपलक्षणं नाग्नौजुहुयात् अग्निस्तावत् वैदिकस्मार्तागमलौकिकभेदेन चतुर्विधः । तत्रहव्यकव्यादिभिन्नः तस्मिन्सर्वस्मिन्नग्नौ नजुहुयात् । नतर्पयेद्देवानृषीन्पितॄनन्यान्वेति । देवर्षितर्पणं स्मार्तनित्यंकर्म तथामन्वादयः। नित्यंस्नात्वाशुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनञ्चैवसमिदाधानमेवच । देवानृषीन्मनुष्यांश्च पितॄन्गृह्यांश्चदेवताः । पूजयित्वाततःपश्चात् गृहस्थश्शेषभुक्भवेत् । इतिवचनात्सर्वकर्मसुभस्मधारणंविधीयते । अयमेवधर्मस्सनातनइतिवीप्सावधारणेअत्यादरार्थकौ। अतत्सर्वपापनाशको मोक्षहेतुश्चायमेवभवति । अयंधर्मोहिद्विजानां ब्रह्मचारिगृहस्थवानप्रस्थयतीनाम् । अतएतदकरणेप्रत्यवैति । यदकरणे प्रत्यवैतीति प्रश्नस्योत्तरमासीत् । अथभस्मधारण प्रमादसंभवे प्रायश्चित्तंविधीयते ।

कथम् । अकृत्वाप्रमादेनैकदाष्टोत्तरसहस्रगायत्रीं जलमध्ये जपित्वोपोषणेनैकेनशुद्धोभवति । अष्टसहस्रगायत्रीमितिपाठान्तरं तत्पक्षेप्ययमेवार्थउचितः । नाभिदघ्नजले सूर्याभिमुखस्तिष्ठन्नष्टोत्तरसहस्रगायात्रींजपन्निराहारस्तास्मिन् दिनेभवेद्यदिसकृद्विस्मृतभस्मधारणाघान्मुच्यते। अथयतिधर्मः । यतिस्त्यक्त्वैकदाभस्मधारणमिदमुपोष्यद्वादशसहस्रप्रणवंजप्त्वाशुद्धोभवति। अन्यथाविहितप्रायाश्चित्तकरणाभावेतस्यशरीरपातानन्तरमिन्द्रस्सालावृकेभ्यः वन्यसरमाभ्यः तद्भक्षणार्थंयतीन्पातयति । भस्मनोस्यसोमभस्मनःविरजाभस्मनोवाभावेतदानर्यभस्मनराणांसुखकरंगार्हपत्यसंभूतंभस्म तदभावेदावानलजंभस्मतदभावेलौकिकंवावश्यम्मन्त्रपूतं अग्निरित्यादिमन्त्रजप्तंलौकिकंवावश्यंधार्यमेव । उंपर्यासमाप्तेः । स्पष्टार्थत्वान्नविवृतम् । इतिभस्मजाबालश्रुतौतृतीयब्राह्मणांविवरणंसमाप्तम् ॥

शिवमस्तु ॥

मूलम् । अथभूसुन्डोजाबालोमहादेवंसांबंप्रणम्यपुनःपृच्छति । किन्नित्यं ब्राह्मणानांकर्मकर्त्तव्यम् यदकरणेप्रत्यवेति । ब्राह्मणैःकःपूजनीयः कोवाध्येयःकस्मर्त्तव्यः। कथंध्येयःक्कस्थातव्यमेतत्ब्रूहिसमासेनेति। तं होवाचप्रागुदयान्निर्वृत्यशौचादिकंततस्स्नायान्मार्जयन् रुद्रसू

क्तैः ततश्चाहतंवासःपरिधत्तेपाप्मनोपह
त्यै। उद्यन्तमादित्यमभिध्यायन्नुद्धूलितां
गोयथास्थानंश्वेतेनैवभस्मना त्रिपुण्ड्रंधृ
त्वारुद्राक्षान्श्वेतानश्वेतान्वानतत्रसम्म
र्शः। मूर्ध्नि चत्वारिंशाच्छिखायामेकन्त्रयं
वा। श्रोत्रयोर्द्वादशद्वादश कण्ठेद्वात्रिंश
त् बाह्वोष्षोडशषोडश द्वादशद्वादशमणि
बन्धयोः षट्षडंगुष्ठयोः। ततस्संध्यामहर
हरुपासीताग्निर्ज्योतिर्ज्योतिरित्यग्नौजुहुया
त्। शिवलिंगंत्रिसंध्यमहरहरभ्यर्च्चयेत्कु
शेष्वासीनोध्यात्वासांबंमामेववृषारूढंहि-
रण्यबाहुंहिरण्यवर्णं पशुपाशमोचकंपुरु
षंकृष्णपिंगलं। ऊर्ध्वरेतसंविरूपाक्षंवि
श्वतस्सहस्राक्षम्। सहस्रशीर्षंसहस्रच
रणं विश्वतोबाहुंविश्वात्मानमेकमद्वैतम्।
निष्कलंनिर्गुणंशान्तंशिवमक्षरमव्ययम्।
हरिंहिरण्यगर्भादिस्रष्टारम्। अप्रमेयम
नाद्यन्तंरुद्रसूक्तैरभिषिच्यासितेनभस्मना
बिल्वदलैस्त्रिशाखैरार्द्रैरनार्द्रैर्वानतत्रसंम

# र्शः। ततः पूजासाधनं कल्पयेन्नैवे द्यान्तं॥

## विवरणम् ॥

अतिक्रांतेब्राह्मणेविहितभस्माभावेपिलौकिकंवामंत्रपूतं अवश्यंधार्यं उपवासमंत्रजपादिप्रायश्चित्तविधानात्सालाव्रके भ्यःपातयतीतितीव्रशासनादवश्यंलौकिकमपिधार्यमित्यव-सीयतेसंतुवाकोटिशश्श्रुतिशासनानिदेहशास्त्रजात्याद्यभिमानपापशापाशनिहतान् कुमतीन्शुद्धीकर्तुमीशोपिनेष्टेसच्छास्त्र लेशविदामपिमुमुक्षूणां शिवैकशरणानांमादृशानामुपकारायके वलमस्याश्रुतेरर्थोयंयथामतिविव्रतः ॥

अथास्मिन् चतुर्थब्राह्मणेस्नानहोमजपार्चनादिस्वरूपजि ज्ञासुर्भूसुण्डोजाबालःपुनःपृच्छति । यथोक्तभूतितिर्यक्त्रि पुण्ड्रधारणमात्रं चतुर्विधपुरुषार्थदत्वेनश्रुतिविहितमपिक्वचि त्क्वचिज्ज्ञानांगत्वेनकर्मांगत्वेनयोगांगत्वेनपाशुपतचिन्हतया शिवार्चनांगतयामहापुरुषधर्मतयामायापाशविच्छेदकतयावि चित्रशक्तिमत्वेनबहुधावर्ण्यमानत्वात् संध्याग्निहोत्रादिवत्त दंगिस्वरूपजिज्ञासयापुनःपृच्छतिमहादेवं । किंनित्यमित्या दिसप्तविधप्रश्नःकृतःतंहोवाचप्रागुदयान्नित्यशौचादिकं गुद हस्तपादमुखक्षालनगण्डूषणाचमनोद्धूलनशिवध्यानान्तं व्य ञ्जितमादिशब्देन। ततःस्नायान्मार्जयन्रुद्रसूक्तैः आवोराजा तद्वोव्रर्माज्यदोहदेवव्रतानि एकादशसामानि । यजुषित्व मग्नेरुद्रइत्यादिमन्त्राः । तैर्मंत्रैर्मार्जयन् नद्यादौस्नानंकुर्या त् । स्नानशब्देनसंकल्पतर्पणादिकमनुवर्त्तते । अहतमप्रह तंनिर्णेजकेनासंताडितंवासःपरिधत्तेप्रधारयेत् । पाप्मनोपह

स्यैउद्यंतमादित्यमभिध्यायन्नभिध्यायेत् । कथं । उद्धूलितांगो
यथास्थानंश्वेतेनैवभस्मनातिर्यक्त्रिपुण्ड्रंधृत्वानकेवलंपुण्ड्रमा-
त्रंरुद्राक्षान्श्वेतानश्वेतान्वानतत्रसंमर्शः । किमर्थंध्यानंपात्म
नःदेहाभिमानतःप्राप्तस्यपापस्यापहत्यैनाशाय उद्यंतमर्णवा
दुत्गच्छन्तंआदित्यमभिध्यायन् । उद्धूलनत्रिपुण्ड्ररुद्राक्षधा
रणपूर्वकमादित्यमभिध्यायेत् । सर्वाघनाशकादित्यांतर्वर्त्ति
हिरण्मयपुरुषस्यवैश्वानरस्यध्यानांगतयाभूत्युद्धूलनत्रिपुण्ड्ररु
द्राक्षधारणमनुष्ठेयमित्यर्थः । शिवलिंगंत्रिसंध्यमहरहरभ्य
र्चयेत् । केनोपनिषदिब्रह्महदेवेभ्योविजिग्येइत्यादिनाय
क्षशब्दार्थभूतंज्योतिर्लिंगमिद्रादिसर्वसुरपूजितम्प्रतिपाद्यतेत
द्वनमित्युपासितव्यमित्यंतेन यजुषिनिधनपतयेनमइत्यादिलिं
गसूक्तेनविहितं ऋचि"तवश्रियेमरुतोमर्ज्जयंतरुद्रयत्तेजनिम
चारुचित्रम् । पदंयद्विष्णोरुपमन्निधायितेनपासिगुह्यन्नामगो
ना"मिति । शिवलिंगशब्दोव्युत्पाद्यते । शिवस्य लिंगमि
तिशिवएवलिंगमितियोगोरूढिश्चदृश्यते । शब्दार्णवे । लिं
गंचिह्ननुमानेचसांख्योक्तप्रकृतावपि । शिवमूर्त्तिविशेषेपि ।
अथपराशरः । पूजालिंगेमहेशस्यपुरुषार्थचतुष्टयम् । ददा
तिसर्वजतूंनामचिरादेवसत्तमेति । श्रीसनत्कुमारः । शिव
स्यपूज्यतेलिंगंसर्वैर्देवासुरैर्नृभिः । शिवेनपूजितःकोवावदंतु
प्रतिवादिनइति । श्रीसूतः । शिवएवस्वयंलिंगंलिंगंगमकमे
वहि । शिवेनगम्यतेसर्वंशिवोनान्येनगम्यतइति । एवञ्चाशि
वस्यलिंगमित्यवयवार्थोयोगः । शिवएवस्वयंलिंगमितिरूढ्य
र्थश्चविद्यते । अतोयोगरूढइतिसिद्धांतितम् । लिंगशब्दा
र्थस्त्वेवंदृश्यतेलीयंतेसर्वाणिभूतान्यस्मिन्नितिपुनरस्माद्वता

निनिर्गच्छंतीति। लिंग्यतेचिंत्यतेस्मिन्परमेश्वरइति लिंगचित्री करणइतिधातोःसकलसृष्टिस्थितिसंहृतितिरोधानानुग्रहपंचकृत्यसमर्थयद्वस्तुतदेवालिंगामीति। ज्योतीरूपस्यसर्वगमकस्यशिवस्यशिलाद्यधिष्ठानंभाक्तंलिंगमित्यागमाः । सर्वात्मकंपरं ज्योतिर्भासकंलिंगमीरितम् । शिलाद्यधिष्ठानंलिङ्गंभाक्तंत द्व्यक्तिभूमिकमिति । एवमुक्तविधंशिवलिंगंत्रिसंध्यम्प्रातर्मध्यान्हसायंकालेष्वपिअहरहःप्रत्यहमभ्यर्चयेत् । एवमेवपुराणानिस्कांदे सत्यंवच्मिहितंवच्मिसारंवच्मिपुनः पुनः । असारेचात्रसंसारेसारंदेववरार्चनम् । एवंप्रलपतोत्युच्चैर्येनशृण्वंतिमेवचः । संधुक्ष्यंतेकृतांते न तदर्थंनरकाग्नयः । लिंगे दिनेदिनेदेवं शिवरुद्रादिसंज्ञितम् । नार्चयिष्यंतिवेदेनपाषण्डोपहताजनाः । शिवलिंगार्चनं कुर्याच्छ्रद्धयैवदिनेदिने । महादेवस्यपूजायाः पश्चात् भुक्तिविधिःखलु । एवंसम्पूज्य विधिवत् शिवमाप्राणसंचरात् । यदिपापेनभुंजीतस्वै रन्तस्यननिष्कृतिः । प्रमादेनतुमुक्तं चेत्तदुद्गीर्यप्रयत्नतः । स्नात्वाद्विगुणमभ्यर्च्यदेवंदेवी मुपोष्यच । शिवमन्त्रंसमभ्यस्य ब्रह्मचर्यपुरस्सरं परेद्युयश्शक्ति तोदद्यात्सुवर्णाद्यं शिवाय वा । शिवभक्तायवाकृत्वामहापूजां शुचिर्भवेत् । वरंप्राणपरित्यागच्छेदनं शिरसोपिवा । नत्वनभ्यर्च्यभुंजीयात्भगवन्तंत्रिलोचनम् । यावन्नायातिमरणं यावन्नाक्रमतेजरा । यावन्नेंद्रियवैकल्यंतावत्पूजय शङ्करमिति । शैवे । अगस्त्यस्यांबुधेःपानंतारणञ्चहनूमतः । राघवस्यास्यबंधश्चशिवपूजाविधे फलं ” । अस्मिन्नर्थेपुरूषार्थ बोधवचनम् । “सांबस्यसच्चिदानंदस्वरूपस्यपिनाकिनः अर्चनंविबुधैरुक्तंनित्य

काम्योभयात्मकम्। नित्यंसदायावज्जीवन्नै वाश्नीयादपूज्य तु। इत्युक्तेरर्च्चनाभावे दोषसंकीर्त्तनन्तथा । फलाश्रुते र्वी प्सयाचनित्यमीशार्च्चनम्मतम् । एषान्नित्यत्वहेतुत्वं कथितं कालनिर्णये । एकादशी प्रकरणेतदृष्टव्यात्रमयेरितं श्रुत्यंत रञ्च रुद्रभुक्तंभुञ्जीतरुद्रपीताम्पिबेत रुद्राघ्रातंजिघ्रीतेति । त्रिगुप्सातमन्नमश्नीयात् । यदिशिवानार्प्पितं भुंक्ष्व । तदेनो भुङ्क्ष्वमलंभुङ्क्ष्वकृमिंभुङ्क्ष्वअधोगच्छगच्छेति" अस्यार्थः। त्रिगु प्सातम् । विसोगान्नोदृशोस्य सन्तीतित्रिगुः चित्र गुवत् । तेनप्सातंप्साभक्षणे भक्षितचर्वितलिप्तमत्यवसितमि रितत्वादितप्सातामिति नि त्रिणेत्रभक्षितान्नादिकमेवाश्नी याः । अघोवान्यद्वारेपाप्मन् यदिकदापिशिवा नर्पितमनिवे दितं भुङ्क्ष्वअश्नीयाः तदेनोभुङ्क्ष्वाश्नीयाः । मलन्नारक मेवभुङ्क्ष्व कृमिन्तन्निष्ठकृमिसंचयं भुङ्क्ष्वअधोगच्छाधोग च्छेतिअत्यन्ताधः पतन मेवश्रुत्याशास्याते । ऋचि । अन्त रिच्छन्तितं जनेरुद्रंपरोमनीषया । गृणन्तितेजिह्वयाससामि ति । शिवपुराणे । " अन्तरिच्छन्तिये रुद्रंभवानीसहितं प रम् । गृण्हन्तिजिह्वयासस्यं रसपूर्णामृतो दकम् । अन्तर्नै च्छन्तियेरुद्रंपार्वती पतिमव्ययं । पुरीषमेवगृण्हन्तिजिह्वयाते नसंशय" इति । एवंवचनजातैः शिवलिंगमहरहस्त्रिसंध्य मादरेणार्च्चयेदित्यर्थः कथंवासमभ्यर्च्चयेदि त्यतआह ध्या त्वासांब मित्यादिनानैवेद्यान्तं कल्पयेदित्यन्तेनप्रकारेण । कृष्णपिंगलमिति शिवस्यवामांगत्वेनविराजमानयागिरिज यासमुत्फुल्लेन्दीवरसच्छाय यानिटिललोचमानल ज्वाल याचसंक्रान्तस्फटिकाकारमित्यर्थः । ऊर्ध्वमेव प्रवर्त्तितरे

तोअस्येत्यूर्ध्वरेतसम् । सकल सुरकुलविलक्षण मीक्षणमस्या स्तीतिविरूपाक्षम् । अथवाअक्षाणां मनइन्द्रियादीनांविगतम दृश्यंरूपमस्येतिवाविरूपाक्षमित्यर्थः । विश्वतस्सहस्राक्षमि त्यादिवैश्वरूप्येण स्तवम् । रुद्रसूक्तै रभिषिच्यसितेनभस्म नाबिल्वदलैस्त्रिशाखै रार्द्रैरनार्द्रैर्वानतत्रसम्मर्शः । तत्रबिल्वा र्चनविषयेइदमार्द्रंशुष्कम्पत्रमिति सम्मर्शनम्विमर्शनन्नभवेत् क थंचिदपिबिल्वैरेवशिवंयजे दितिनियमः । पूजासाधनंकल्पये न्नैवेद्यान्तं आपद्विषये नैवेद्यपर्यंतमलमितिमतम् । अने नाधिकोपचारोनकार्यइतिन । अङ्गहोमपरिक्रमनतितांबूला द्युपचाराश्च कर्त्तव्याः । अनेनस्नानसंध्याग्निहोत्रलिंगा राधनं नित्यंकर्म्मकर्त्तव्यमित्युक्तमासीत् । ब्राह्मणैः कः पूजनीयइति प्रश्नस्योत्तरञ्च । यदकरणेप्रत्यवैतीत्यस्याप्यु क्तम् ।

मू० ॥ ततश्चैका दशगुणरुद्रो जप नीय एक गुणोवा । ततः षडक्षरोष्टाक्षरोवा शैवोमन्त्रोजपनीयः । ओमित्य ग्रेव्याहरे न्नमइतिपश्चात्ततश्शिवाये तित्रीण्यक्षरा णि । ओमित्यग्रेव्या हरेन्नमइतिपश्चात्त तो महादेवायेति पंचाक्षराणि,, नातस्ता रकः परमोमंत्रस्तारकोयंशैवो मनुश्शैवो मनुस्तारकः । अयमेवोपादिश्यते मनुरावे

मुक्तेशैवेभ्य आसन्नजीवेभ्यः । अयमेव मन्त्रस्ता रयातिसएष ब्रह्मोपदेशः ॥

इतिभस्मजाबालश्रुतौ चतुर्थब्राह्मणे

प्रथमः खंडः ।

---

## विवरणम् ।

ततः पूजानंतरंवेद सारश्रीरुद्रमन्त्रजपउच्यतेएकादश गुणोरुद्रइति । एकादशवारंएकवारं वाश्रीरुद्रजपः कार्यए व । अनेनश्रीरुद्रजपश्चतुराश्रिमिभिः कार्यः गृहिभिश्चमक स्यएकैकानुवाकेन्नसंयोज्यजप्यः । यतिभिश्श्रीरुद्रमात्रमित्य र्थः । ततष्षडक्षरोष्टाक्ष रोशैवोमन्त्रोजपनीयः । उक्तमन्त्रद्वयमे वश्रुतिर्विवृणोति ओमित्यग्रेव्याहरेन्नमइतिपश्चात्ततश्शिवाये तित्रीण्यक्षराणीतिषडक्षर मन्त्रोद्धारः । ओमित्यग्रेव्याहरे न्नमइतिपश्चात्ततोमहादेवा येतिपंचाक्षाराणि । ओन्नमश्शि वायओन्नमोमहादेवायेतियोष्टाक्षरमन्त्रः । अतएतद्द्वयात् परम उत्कृष्टः तारकोनास्ति । तस्मात्तारकोयंशैवोमनुश्शैवोमनु स्तारकइतिअयमेवमति पादितोमन्त्रश्श्रीकाश्यामीश्वरेणजंतू नामापन्नानांकर्णेसादरमुपादिश्यते । एवमविमुक्तजाबालश्रुता वपिश्रूयतेतस्मादयमेव तारकइत्यर्थः ॥

ननुरानामतारकं भुक्तमुक्तिदायकमिति महान् लोकप्र वादः प्रसिद्धोस्ति । अहंभवन्नामगृणनकृतार्थोवत्स्यामिका

श्यामनिम्श्रभवान्या । मुमूर्षमाणस्यविमुक्तये संदिशामिमत्रं तत्वनामरोमत्यध्यात्म रामायणोक्त्या । कलिसन्तारणोपनिषदि । हरेरामहरेराम रामरामहरेहरे। हरेकृष्णहरेकृष्णकृष्णकृष्णहरेहरे । इति षोडशकन्नाम्नां कलिकल्मषनाशनम् । नातः परतरोपायः सर्ववेदेषुदृश्यतयइति। रामोत्तरतापिनियोपनिषदि । क्षेत्रेस्मिन्तवदेवेश यत्रकुत्रापिवामृताः । कृमिकीटादयोप्याशुमुक्तास्संतुनचान्यथा। अविमुक्तेतवक्षेत्रे सर्वेषांमुक्तिसिद्धये । अहंसन्निहि तस्तत्रपाषाण प्रतिमादिषु । मुमूर्षोर्दक्षिणेकर्णेयस्यकस्यापिवास्वयम् । उपदेक्ष्यासि मन्मंत्रं समुक्तोभवितशिवेति ॥

मुक्तिकोपनिषदि । मारुतिः । रामकेचिन्मुनिश्रेष्ठामुक्तिरेकेतिचक्षिरे । केचित्त्वन्नाम भजनात्काश्यान्तारोपदेशनात् । अन्येवेदान्तवाक्यार्थविचारा त्परमर्षयइति प्रश्नस्य श्रीरामः । कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी । दुराचाररतोवापिमन्नामभजनात्कपे । सालोक्यमुक्तिमाप्नोति नतु लोकान्तरादिकं काश्यांतुब्रह्मनालेस्मिन्मृतो मत्तारमाप्नुयात् । पुनरावृत्तिरहिता म्मुक्तिमाप्नोतिमानवः । यत्रकुत्रापिवाकाश्याम्मरणेसमहेश्वरः । जंतोर्दक्षिणकर्णेतु मत्तारंसमुपादिशेदिति । प्रमाणशतैः श्रीरानाम्नोवाराममूर्त्तेर्वा । रां रामायनमइतिरामषडक्षरमन्त्रस्यवा तारकत्वेसिद्धे कथमवांतरैवषडक्षरस्यतदष्टाक्षरमंत्र स्यवातारकत्वमिति चेच्छृणु । अस्माभिर्वैदिकैः सर्वाश्रुतयोप्रमाणीकार्याः । यथाउदिते जुहोतिअनुदिते जुहोतीत्यु भयविधानस्या वैध्यायगतिः शाखाभेदनकल्प्यतेतन तथेहगतिकल्पन मुचितं । उभयाविध्य-

भावात् रौद्रमंत्रादन्यस्यतारकत्व मेवनास्ति । यद्यस्ति गौ
ण्यावृत्यास्तुनाम लोकेकुल्यातरणादि साधनीभूताः कति
वानसंति । ततश्चलोकप्रवादइति यदुक्तंतदजासंत तिन्यायै
नप्रवर्तते सत्क्षत्रियाभावात् ततः सामसिद्धिरकिं चित्करैव
उदाहृताऽध्यात्म रामायणवचनंधीमता मपहासास्पदंनकि
म् यतः श्रीदूर्वासमुनिवरेणदून मानसायदशरथायश्रीनारा
यणएवभृगुमुनिशप्त स्तवपुत्रतामेत्यायुताधिकवत्सरजीवीदा
रवियोगदुःखमनुभूयपुत्रा नुत्पाद्ययष्ट्वादिवंग मिष्यतीत्य
नुगृहीतः पुनः सीताशोकेनागस्त्याश्रमं गत्वातदुपदिष्टदी
क्षाचारोमासचतुष्टयेन महादेवंसाक्षात् कृत्यतत स्सर्वास्त्रश
स्त्रसहितम्महापाशु पतमुपलभ्य भृगुमुनिवृन्दाशापाच्च दा
रवियोगदुःखंचिरमनु भूयपुनर्दूर्वा समुनिकारितविक्लवः
सन्नन्ततः कालमृत्युनाहूत स्सरयूनद्यामाप्तबन्धुभिस्सहतनुं
त्यक्त्वादिवंगतइतिरामायणएवदृश्यतेतमेनन्दाशरथिंरामंनि
त्यः कालान्तकोरुद्र स्सर्वोपदेष्टाचसन् । राम त्वन्नामगृही
त्वाअविमुक्तेजन्तूनां विमुक्तयेवर्त्तेइति वक्तुन्नयुज्यते । न
नुश्रीरुद्रोरामस्यमुख्य भृत्यस्तदाज्ञयातत्राविमुक्तेस्वपुरएव
सन्मुक्तिन्ददातीतिचेन्न । मुख्यभृत्यस्य रुद्रस्यायोध्यायां
स्वपुरएवस्था पनीयत्वात् । अथरामस्यनाम्नोवात त्पर्या
यषडक्षरस्य वातारकत्वेस्वस्यगुरुत्वे चसतिअयोध्यायामेव
स्वयन्नामोपदिशेत् । तर्हिअग्निदत्ताग्नेयास्त्रवत्वीर्य वत्तरंभ
वेत् । नन्ववतारात्पुरातनुत्यागानन्त रञ्चतारकविच्छेदादु
पदेष्टुरभावाच्च जन्तूनांमुक्तिरतिदुर्ल्लभास्यात् । अथवाश्री
नारायणेरामस्यापि मूलभूतेसुचिरस्थायिनि श्रीवैकुण्ठपदेस्व

रूपनिष्ठेब्रह्मादिदेशिके सतितस्यैवतार कत्वोपदेष्टृत्वविभू तिः कुतोनावगम्यते । तत्रमौनमेवोत्तरंचेदास्तामेतत् । श्रीमान्पतजंलिः । परमेश्वरस्यैवमूल गुरुत्वंसहेतुकंसूत्रयामास । क्लेशकर्मविपाकाशयै रपरामृष्टःपुरुषविशेषईश्वरः तस्यसार्वज्ञम्बीजं । तस्यवाचकःप्रणवः । सपूर्वेषामपिगुरुः कालेनानवेच्छे दादिति । शिवपुराणंच । प्रतिसर्गप्रसूतानांब्रह्मणांशास्त्रविस्तरम् । उपदेष्टासएवासीत्का लाव च्छेदवर्त्तिनाम् । कालावच्छेदयुक्तानां गुरूणामप्यसौगुरुरिति । गुरुर्मंत्रस्तारकउपदेश वेदिकाचसर्वपारमेश्वरमेव । सत्येवमविमुक्तेरुद्रस्स्वतार मन्त्रमुपदिशतीतिराज पथंविहायकृथा श्रमशिरोवेष्टनप्राणायामे नकिंफलञ्जायते । एतत्सर्वंविस्मृत्य । अहम्भवन्नामग्रणन्निितिय दुक्तन्तदसमंजसम् । किंचाध्यात्मरामायणं कृतकमपिवाल्मीकादिवत् ब्रह्माद्यनुग्रहाभावाद्दुरर्थ प्रतिपादनप्राचुर्या च्चासारमेव कलिसन्तारणश्रुतौ हरेरामहरेराम । हरेहरे । हरेकृष्ण । हरे । इति नामषोडशकस्य यागहोमादिभ्योपिकलिक लुषनाशनसामर्थ्यमस्त्येवनतावतारामनामादितारकंभवितुमर्हति तथाश्रुत्यापिनोच्यते। रामोत्तरतापनीयेतु। तवाविमुक्तक्षेत्रेकीटा दयोपिमुक्ता स्सन्तु। तत्राहंश्वसर्वमुक्तये पाषाणप्रतिमादिषुवर्त्ते। यस्योपदेक्ष्य सिमन्मन्त्रंसमुक्तोभविताशिवेति निगादितम्। अविमुक्तक्षेत्रेरौद्रंश्रीरुद्रएवतत्रोपदेष्टा। तारकोयंशैवोमनुश्शैवोमनुस्तारकइति श्रुतिशासनात् शिवमन्त्रएवतारकः। सत्येवंपाषाणप्रतिमादिषुकिमर्थं श्रीरामस्तिष्ठति । तन्नामग्रहणेनवाहरस्यकिंफलम् । तन्नाम्नएवतारकत्वात् ग्राह्यमि

तिचेन्नभस्माविमुक्तजाबाल श्रुत्योश्शिवमन्त्रस्यै वतारत्व प्रसिद्धेः । उत । रामस्यतन्नाम्नोवासंसारदुःखतारकत्वेस तिअतिवत्सलं जनकमेकंवातारयेत् । नतथादृश्यते । सतसु तविरहदूयमानमना रामरामेतिविलपन्नेवासून्विमुश्वन् राज र्षिसाधारणंस्वर्गमेवाया सीदितिस्थितेः । अथपराभिमत तारकरूपोरामोपिस्वयंमुक्ति मनवाप्यतनुत्यागान न्तरंवैव स्वतराजधान्यांन्याय सभायांबहुषुवैव स्वताराधकेषुतटस्थे षुराजर्षिषु रामोप्यास्तेइति वर्णितंसभापर्व्वणि । यमंवैव स्वतंतातप्रहृष्टाः पर्युपासते । ययातिर्नहुषः पूरुर्मांधातासोम गोनृपः । इत्युपक्रम्यरामोदाश रथिश्चैवलक्ष्मणश्चप्रतर्दनइति परिगणनेनअयमपिकर्मा धीनलोकप्राप्तिकोजीव विशेषएव स्यात्नाकर्माधीनः परमेश्वरोभवितुमर्हति । तथापिपुण्य श्लोकोनलोराजापुण्य श्लोकोयुधिष्ठिरइति वल्लोकंपुण्यश्लो कएवभवेत्तन्नामभजनादपिपापसंक्षयोभवेन्नाम । श्रुतिश्चयो ममषण्णवतिकोटिनामानि जपतितेभ्यः पापेभ्योविमुच्यते इति । ततस्तन्नामभजना दपिक्रमान्मुक्तिमाप्नुयादेव । दैव गत्याऽविमुक्तंप्राप्यपरमेश्वरोपदिष्ट तत्वज्ञानावाप्त्यावामु क्तिमवाप्नोतु । एवंचरामनाम्नोप्यापेक्षि कतारकत्वंक्रममु क्तिश्चभवेन्नाम । अपितुनातस्ताकरः परमोमत्रस्तारकोयंशै वोमनुशैवमनुस्तारकः । अयमेवोपदिश्यते मनुरविमुक्तेशैवे भ्यआसन्नजीवेभ्य स्सएषब्रह्मोपदेशइतिपुनरभ्या सश्रुतिसं कोचेमानाभावात्शैवषडक्षरस्यतदष्टाक्षरस्य चमंत्रस्यसाक्षा त्तारकत्वमवसीयते।मुक्तिकोपनिषदिमारुतिप्रश्नस्योत्तरम् । दुराचाररतोवापिमन्नामभजनात्कपे । सालोक्यमुक्तिमाप्नो

तिनतुलोकांतरादि कमित्युक्त्यैवश्रीरामना म्नोत्यंततार त्वंतेनात्यंतिकीमुक्ति श्चनास्तीत्यभिहितमेव । जंतोर्दक्षिणक र्णेतुमत्तारंसमुपादिशेत् । मत्तारमाप्नुयादिति वाक्यद्वयस्य कागतिरितिचेच्छृणु । मत्तारमित्यत्रकर्मणिषष्ठी परिग्राह्या । नान्यथा अयमभिप्रायः । योमनु श्शैवषडक्षरोमांभवा त्तारयतिसमत्तारइत्यर्थः। यश्श्रीमदगस्त्योपदिष्टतत्वष्षडक्षर मंत्रस्तुममतारकोभूत्तमेव मत्तारमविमुक्तेरुद्रस्समुपादिशेत् । समुपादिशदिति चार्थोवक्तव्यः । अन्यथामन्नामात्मकंतार मितिपक्षेस्वयमेवजंतुभ्य स्स्वनाममंत्रोपदेशने कानुपपत्तिरि तिपृष्टेप्रतियुगंधर्म संस्थापनार्थमाविर्भावति रोभावाभ्यांपरि मितवयस्कतयाच रामस्यनह्युपदेष्टृत्वसंभव इतिवाच्यम् । तर्हिनित्योमहादेवोयउपदेष्टातन्मन्त्रस्यैवतारकत्वेश्रुतिप्रसिद्धे तद्देव साक्षादभ्युपगंतव्यम् । एवमुक्तैरेवसन्न्यायमानैः । श्रीरामस्यमनुंकाश्यांज जापवृषभध्वजः । मन्वंतरसहस्रैश्चज पहोमार्चनादिभिः । ततः प्रसन्नोभगवान्श्रीरामः प्राहशंक रमिति । यदावर्णयत्कर्णमूलेतुकाले शिवोरामरामेतिरामे तिकाश्यामित्याद्यसंगताधुनातन वचनान्यपिप्रत्युक्तानिवेदि तव्यानि । अपिचवैदिकार्थव्य वस्थापनस्योपब्रह्मणा नुरो धित्वात्कानि चिद्वचनानिविलिख्यंते । ब्रह्मोत्तरखण्डे । "अ गस्त्यरामादिभिराद्रतत्वादमुष्यमंत्रस्यचवैदिकत्वात् । पर स्यतत्वस्यचवाच कत्वान्नमश्शिवायेतिसदा जपध्वमिति" । काशीखण्डे । " भर्ज्यंतेकर्मबीजानियत्र विश्वेशवन्हिना । अतोमहाश्मशानंतदगतीनांपरागतिः । ब्रह्मज्ञानंकुतोदेविक लिनोपहतात्मनाम् । स्वभावचंचलाक्षाणां तद्ब्रह्मेहदिशाम्यहं

मरणंमंगलंयत्रविभूतिर्यत्र भूषणम् । कौपीनंचापिकौशेयंका
शीकेनोपमीयते । ” “कौर्मे । यत्रसाक्षान्महादेवो देहान्ते
स्वयमीश्वरः । व्याचष्टेतारकंब्रह्मतदेवेदं विमुक्तिदम् । एवं
चोपदेष्टामूलगुरुश्श्रीरुद्रः उपदेशदीक्षामण्डपो अविमुक्तम् ।
उपदेश्यन्तारंवस्तुप्रणवज्ञान ब्रह्मशब्दापर पर्यायमितिप्रतीय
ते । अथवाथर्वशिरसि।“अथकस्मादुच्यतेओंकारः अथकस्मा
दुच्यतेप्रणवः अथकस्मादुच्यते तारंअथकस्मादुच्यतेमहेश्व
रइत्यादिप्रश्नमध्यगततार शब्दस्यनिर्वच नमिदम्’ । यस्मा
दुच्चार्यमाणएवगर्भजन्म जरामरणसंसार महद्भयात्तारयति
तस्मादुच्यतेतारमितिश्रुतेः प्रणवस्यैव प्राधान्येनतारत्वम् ।
तत्रओमित्यग्रेव्याहरेदिति शिवमंत्रोद्धारदर्शनात् तस्यैवता
रस्यतारत्वेनकोपिभंगः । तथाहिओमित्येतदक्षरमिदंसर्वम् ।
ओंकारएवेदंसर्वम् । ओमित्यात्मानंयुंजीत । एतद्वैसत्यकाम
परंचापरंच ब्रह्मयदोंकारः । तत्तेपदंसंग्रहेणब्रवीम्योमित्ये
तत्ओमित्येवंध्यायथात्मानं ओमितिब्रह्म ओमितीदंसर्वम् ।
इतिश्रुतिशतसंघुष्टः प्रणवएवतारमंत्रः । तत्प्रधानत्वाच्छैवष
डक्षरोपितारोभवेत् । अपिचरमुक्रीडायामितिधातोः रम
न्तेयोगिनोयस्मिन्यस्तेषुरमतेथवेतिव्युत्पत्यापिप्रणवात्मापर
मेश्वरएवव्यंजितः । सर्वस्यप्रियवस्तु न्येवरमणंप्रासिद्धं ।
तच्चप्रियतमंवस्तुस्वपारमार्थि कंपराशिवस्वरूपमेव सचप्रणव
स्सन्नन्तर्नदति । ओमित्यंतर्नदतिनियतंयः प्रतिप्राणिशब्द
इतियोगशास्त्रे । श्रु । प्रणवंहीश्वरंविद्यात्सर्वस्यहृदयेस्थितम्
सर्वव्यापिनमोंकारं मत्वाधीरोनशोचतिरमणीयत्वपक्षेप्यों
कारेश्वरस्यैवसामञ्जस्यंभवति । तस्माद्रामकृष्णगोविंदा

दिनाम्नांपापशोधकत्वेन कृमसुक्तिरेवा भिमता । शैवषडक्ष
क्षरस्यतत्‌बीजकत्वात्सा क्षात्तारकत्वसामंजस्ये नोपपद्यते ।
किंतुततारस्यैवतारत्वेइतिभावः । इममर्थंधीराः प्रसादिन
स्स्वयमेवजानीयुः । मूर्खासुहुरुपदेशेनकथमपिजानंति ।
अवैदिक कुवादिन श्शास्त्रवेत्तारोपि पूर्वाघकुलान्महामुनि
शापात् प्रायश्चित्तवैमुख्यात् भूतिरुद्राक्षधारण लिंगार्चन श्री
रुद्रपंचाक्षर सन्यासाविमुक्ता दिशिवस्थानवासश्रद्धा भावा
त्परमार्थंदूरीकुर्वंति । तथापिमादृशानां वैदिकानांमन्दप्रज्ञा
नां परस्परोपदेशयोग्य मपिभवेत् । एवंचश्रुतिभिः शिवमंत्र
स्यैव तारकत्वमिति सिद्धान्तितम् । अयमेवमंत्रश्शैवेभ्यः उ
क्तवक्ष्यमाणलक्षणेभ्यः आसन्नजीवेभ्यः कण्ठगतप्राणेभ्यः ।
उत्क्रमणानन्तरं विशुद्धानुपदिश्यतारयति । अविशुद्धान्भै
रवे णशुद्धान्सपादिकारयि त्वोपदिशतिस एषब्रह्मोपदेशः ।

इति चतुर्थ ब्राह्मणे प्रथमः खण्डः ॥

मू० । ब्रह्मासोमोहं पवनःसोमोहं प
वते सोमोहं जनितामतीनां सोमोहं ज
नितादिवःसोमोह जनितापृथिव्याः सो
मोहं जनिताग्नेः सोमोहं जनितासूर्यस्य
सोमोहं जनितेन्द्रस्य सोमोहं जनितोत
विष्णोः स्सोमोहमेव । जनितामनश्चन्द्रम
सोर्वेदानां भूर्भुवस्स्वरादीनां सर्वेषांलोकानां

च विश्वंभूतंभुवनांचित्रं बहुधाजातं जाय
मानंचयत् । तत्सर्वस्यसोमोहमेव जनि
ता विश्वाधिको रुद्रोमहर्षिः । हिरण्यग
र्भादीन् जायमानान्पश्यामि । योरुद्रो
अग्नौयोअप्सुयोविश्वं भुवनमाविवेश ।
सचाहमात्मान्तरात्मा परमात्मा ब्रह्मज्यो
तिर्यस्मान्नमत्तोन्यः । परोहमेवा परोवि
श्वाधिकः । तमेवविदित्वा मृतत्वमेति त
रतिशोकम् । सांसृतिकीं रुजंद्रावयामि त
स्मादहंरुद्रः । योहंसर्वेषांपरागतिः सोहं
सर्वगः । यतोवाइमानि भूतानिजायान्ते ।
येनजातानि जीवान्त । यत्प्रयन्त्यभिसं
विशन्ति । मामेव विदित्वोपासीत । भूते
भिर्देवैरभिष्टुतोहमेव। भीषास्माद्वातः पव
ते भीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्च
सोमान्मत्तएव । योहंसर्वेषामधिष्ठातास
र्वेषां भूतानांचपालकः । सोहं प्रथिवीसो
हमाप स्सोहन्तेजः सोहंवायुःसोहमाकाश
स्सोहंकालःसोहन्दिशः । सोहमात्मामयि

सर्वं प्रतिष्ठितम् । ब्रह्मविदाप्नोतिपरं ब्र
ह्माशिवोमअस्तु सदाशिवोम् । अचक्षुर्वि
श्वतश्चक्षुरकर्णो विश्वतःकर्णः । अपादो
विश्वतः पादोपाणिर्विश्वतःपाणिर शिरा
विश्वताश्शिराः । विद्यामात्रसंश्रयो विद्या
रूपो विद्यामयो विश्वेश्वरोहमजरो हंमा
मेवं विदित्वासंसृतिपाशात् प्रमुच्यन्ते ।
तस्मादहं पशुपतिः पशवश्चामानवं ब्र
ह्माण्डमध्यवर्त्तिनः । युक्तात्मानोयतन्तो
मा मेवप्राप्यान्ते नपुनरावर्त्तन्तेन पुनरा
वर्त्तन्ते । त्रिशूलनिलयां काशीमधि श्रि
त्य त्यक्तासर्वोमय्ये वानुप्राविशन्ति । प्र
ज्वलद्वह्नि गंहविर्यथानयजमानमासाद
यति तथा सूनूत्यक्त्वाकुणपन्नता दृशंव
पुराप्नुवन्ति । एषएवादेश एषउपदेश
एषएवपरमोधर्मः । सत्यात्तत्रन प्रमदित
व्यन्नतत्रोद्धूलन त्रिपुण्ड्राभ्याम् । तथा
रुद्राक्षधारणा त्तथामदर्च्चनाच्च । प्रमादो
ना पिनान्तर्देवसदने नीरीकुर्यात् । दृता

न्न प्रमदितव्यं तद्धितपस्तद्धितपः । का श्यामेवमुक्तिकामाना मासनन्नत त्याज्य म् । मोचकोह मविमुक्तेनिवसतां नावि मुक्तात्परंस्थानम् । भस्मश्रुतौ चतुर्थब्रा ह्मणे द्वितीयःखण्डः ॥

श्रीशिवमस्तु ।

## विवरणम् ।

ब्रह्मासोमोह मितिउमया सहित:सोमः । उइतिस म्बुद्धिवाचकः माङ्निषेधार्थः । प्राक्पर्वतराजकुमारीपरमे श्वरमुद्दिश्यतपः कर्त्तुमारेभे । तदान्मातामेनावत्सलतया उइतितांसम्बोध्याभिमुखीकृत्य मा इतितस्यास्तपोन्यरुधत् । ततएवोमानाम्न्यासीदितिकेचित् । अन्येतु अकारोकारम काररूपः प्रणवःशिववाचक आसीत् तथैवोकारमकाराका रात्मकः । प्रणव एव शक्तिवाचक इति यत्तद्रोचते सुधियां । यतओमित्यवसानं सर्वशब्दार्थोपसंहारः सूच्यते । उमाइ त्याकारेण सर्वारम्भः सूच्यते । अनेनशक्तिप्राबल्ये जगदा रभ्यते शक्तस्योन्मेषेसर्वसंहारइत्यवसीयते । तथाचाभियु क्ताः।ओमित्युमेतियुवयोरभिधानमेकं सृष्ट्यादिसृष्ट्यवधिता गुणमात्रभिन्नं एकञ्चतावदभिधेयमपीहरूपं वेणीजटेतिकच संहतिभेदभिन्नमिति । एवंभूतयाउमादेव्यासहितः सोमः । योस्तिब्रह्माजगत्स्रष्टा । ससोमोहमेवयथातरङ्गफेनादिस्समु

द्रान्नाभिद्यतेतद्वत् । पवनःपवत इतिसर्वंपुनातीत्यंतरिक्षवायुः। सोमोहमेव। मतीनां सर्वबुद्धीनां जनिताजनयितातत्तत्कर्मा नुरोधेनचोदकः सोमोहमेव। दिवः पृथिव्याश्चतदंतरालव र्त्तिनांच जनयितासोमोहम् । एवमग्नेः सर्वहोमसाधनभूतस्य सूर्यस्यच सहातिगच्छतीति सूर्यः। सृगतौतस्यचजनयिता हम् उताविष्णोः वेवेष्टीतिविष्णुःविषल्व्याप्तौउतशब्दोऽप्यर्थः विष्णोरपिसोमोहमेवजनयिता । एवंसाम्निश्रूयते । सोमः पवतेजनितामतीनां जनितादिवोजनितापृथिव्याः। जनि ताग्नेर्जनितासूर्यस्य जनितेन्द्रस्यजनितोतविष्णोरिति । पुन रनुक्तसमुच्चयार्थंमंत्रमाह। विश्वंभूतंभुवनंचित्रंबहुधाजातंजाय मानंचयत्तत्सर्वंस्याहमेवजनयिता । तर्हि लोकदुःखानुभव इतिशङ्कावारणायअहंविश्वाधिको महर्षिः विश्वाधिकोरुद्र इति श्रुत्यन्तराद्यस्माद्योधिकः सतस्यदुः खेननालिप्यतइ तिन्यायात् । यथावृक्षादुपरि दृश्यमानश्चन्द्रबिंबः । तथा महर्षिः। ऋषतिसर्वं जानातीतिऋषिः । परमेश्वरप्रसादात् अनन्यायत्तेनस्वाभाविकेनज्ञानेनसर्वं सर्वदाजानातीतिम हर्षिरितिमहेशस्य विशेषणं युक्तमेव । हिरण्यगर्भादीन् जायमानान्प्रतिक्षण मिवप्रतिकल्पमुत्पन्नानुत्प द्यमानानुत्प त्स्यमानांश्चानुग्रह दृष्ट्यापश्यामि । पुनर्विभज्यस्वव्याप्तिंद र्शयति । योरुद्रोअग्नाविति श्रीरुद्रो विश्वानिभुवनानि आ विवेशसस्सोमोह मात्माभौतिकंशरीरम् । अन्तरात्माअ भिमानीक्षेत्रज्ञः परमात्माघवाकशस्थानीयः कूटस्थः एते त्रयोप्यहमेव । ब्रह्मज्योतिः यत्ब्रह्मज्ञानं तदपिनमत्तो न्यत् । परश्चा परश्चाहमेव विश्वाधिकःमामेवात्मानं विदित्वा

मृतत्वमेति शोकन्तरतिच । यतस्संसृतिकींरुजंद्राव यामि तस्मादहंरुद्रः । योहमाकाश वत्सर्वगः सोहंसर्वेषांपरायण म् । अथतटस्थलक्षणेनात्मनःकारणत्वं ख्यापयतियत इति भूतेभिभाँति कदेहवल्भिःदेवैः सुराद्यैश्चाहमेवाभिष्टुतः । अ स्मात्सोमान्मत्त एवभीषावातःपवते यथाकालं । तथाचसूर्यः सहातिगच्छतीतिसूर्यः । सृगतौतथाग्निश्च तथेन्द्रश्चसोमान्मत्त एवभयेन स्वस्ववृत्तिं कुर्वंतीत्यर्थः । तथासर्वाधिष्टातासर्वपा लकश्चाहमेव । पृथिव्यप्तेजोवाय्वा काशकालात्माहमेव । मय्यधिष्ठाने सर्वस्यकल्पितत्वा दहमेवेत्यर्थः । ब्रह्मवित्परं ब्रह्माप्नोतिसाधकप्रार्थनं ब्रह्माशिवोमेअस्तु सदाशिवोम् । ब्रह्मासर्वपरिबृढः शिवःमेमह्यं सदासन्ततं शिवोपरममंगल मस्त्वितिशेषः अचक्षुरित्यादिवैश्वरूप्येणस्तुतिः । किंचाहं विद्यामात्रसंश्रयः । ब्रह्मविद्या मुमांकेवल माश्रित्यलोको पकारायवर्त्ते । अतश्चारूपस्य ममाविद्यैवरूपमतो विद्या रूपः । विद्यामयो विश्वेश्वरोहं अजरोहं मामेवंविदित्वा संसृति पाशात्प्रमुच्यते । तस्मात्पाशमोच कतयाहं पशुपाश मोचकः पशुपतिः तारोपदेशा त्परमेतावत्कथंध्येय इतिप्र श्नस्योत्तरमभवत् । पशवश्चामानवं ब्रह्मादिमनुष्य पर्यन्तंपश वः । चतुष्पदामुतचाद्वि पदामितिश्रुतेः । चकारादनेकपादा अपदाश्चजन्तवोगृह्यन्ते । तर्हिस्थावरप्रभृति मानवपर्यन्ता जन्तव इत्यामानवामिति । ब्रह्माण्डमध्यवर्तिन इतिसर्वसंगृ हार्थमेवं सर्वेपशवः । अहं पशुपतिः । तेषुब्रह्माण्डा न्तर्वर्ति पशुषुये युक्तात्मानो मोक्षोपायतमयुक्तमात्मान्तः करणं येषा न्ते युक्तात्मानः । यतन्तःसन्यासादि नायत्नंकुर्वन्तो अन्ते

कर्मसाम्यसमये मामेवप्राप्यनपु नरावर्त्तन्ते । द्विरुक्ति रा
दरार्था ।त्रिशूलनिलयां । शूलतिऽदथ यतीतिशूलम् । शूलरुजा
यां अस्त्रीशूलंरुगायुध मितिनि । शूलशब्दस्यलक्षणया अयो
मयेकण्ट केशक्तिःत्रीणि शूलान्यस्येतित्रिशूलं श्रीरुद्रस्य शू
लायुधमेवनिलयो निवासस्थानं यस्यास्साता न्त्रिशूलनिलयां
काशीमाश्रित्यत्यक्तासवइति श्रुत्यायत्रकुत्रापि मृतदेहमानीय
दाहादिकृतमपिता रोपदेशोमुक्तिर्वानास्तीतिमहतीपुण्यलोका
वाप्तिरस्त्यैव। बुद्धिपूर्वकाशी माश्रित्यत्यक्ता सर्वोमय्येवानुवि
शन्ति । कथम । प्रज्वल द्वह्निर्गहविः । हूयन्ते प्रीण्यन्तेदेवा
अनेनेतिहविः । चरुपुरोडाशादिकम् । यथायजमानंपुनर्ना
सादयतिनागच्छति । अग्निंप्राप्याग्निरेव भवतितथासूनत्य
क्त्वाकुणपन्ता द्दशंप्रेताकारंवपुः । उप्यतेकर्मबीजमस्मिन्नि
तिवपुः । तत्पुनर्नाप्नुवन्ति । एषएवादेशः यदुक्तमत्रकाश्यां
त्यक्तासवस्त्यक्तदेहाः पुनर्देहन्नाप्नुवन्तीति एषएवादेशः
आदिश्यतेआज्ञाप्यते अनेनेत्यादेशः । शिवाज्ञेयंकेनाप्यलं
घनीयेतिभावः । किंचएषउपदेशः । पुत्रशिष्यादिभ्यः प्रे
म्णास्वांकमारोप्याहितो पदेशोप्ययमेव । एवमादेशोपदेशा
भ्यामन्येन प्रकारेणोपदेष्टुंद्वाराभावात् । कलिमलिनचित्ता
नांजन्तूनांयोगेनवासम्यक् ज्ञानेनापिमुक्तेरति दौर्लभ्याचा
विमुक्तमुक्तिमत्येवाक्षि प्रंयतध्वमितिभावः । अपिचतस्मादे
षश्श्रीकाशीनिवास एवपरमोधर्मः। धरतिलोकानितिधर्मः।
गिरिनदीसमुद्रद्युलोकादिकं जगद्धर्मेणैवधार्यत इतीहिशास्त्र
प्रसिद्धिः । अथवाधृयते सुजनैरितिवाधर्मः । काशीनिवास
एवमुक्त्यैपरमउत्कृष्टोधर्मः अत्रावधारणादन्य धर्मेभ्योवर्णा

श्रमधर्मकृच्छ्रचान्द्रा यणयागहोमध्यान समाधिभ्योपिसापा येभ्यश्चायं श्रीकाशीनिवासधर्म एवनिरपायोविशिष्यत इतिभावः। तत्रश्रीकाश्यां सत्यात्सत्यभाषणात्कदापिनप्र मादितव्यंप्रमादः। मद्रोहर्षेभावेयत्र प्रमादोनकर्त्तव्यः। पुरु दुःखसन्तुष्टयोरपीत्यर्थः। नतत्रोद्धूलनत्रिपुण्ड्राभ्यां तथा रुद्राक्षधारणात् श्रीरुद्रस्यपुरारे निमीलितोन्मीलिताक्षाणांक्ष रदक्षिधारिणतांना मक्षाणांज्ञान लोचनविकासहेतु त्वात्तद्धा रणप्रमादोनकार्यइत्यर्थः। तथामदर्चनाच्च। स्पष्टार्थः। प्र मादेनापिनान्तर्देवसदने नीरीकुर्यात्। सीदंतिविश्राम्य न्तिसर्वेअत्रेतिसदनं षदॢअधिगमेयुच्प्रत्ययः। तत्रान्तर्गृहे ननीरीकुर्यात् निरीकरणन्नाम। उच्छिष्टजलेनबालालया वामूत्रोत्सर्गतः गण्डूषणेनवानी रीकुर्यादार्द्रीकुर्यात्। एता दृशप्रमादसंभवाघात् भीरुभ्योहिसाधुभ्यः पुनः प्रायश्चित्त मभिव्यंजयतिश्रुतिः किमितिव्रतान्नमम दितव्यमिति। व्रत मेतत्पाशुपतम् व्रतमेतच्छाम्भवम्। शिरोव्रतं विधिवदितिश्रुति भ्यः श्रीसूतश्च सत्याद्धर्माच्चकुशलाद्भ स्मनोद्धूलनादपि। त्रिपुण्ड्रधारणाच्चापि स्वाध्यायाध्ययनादपि। अन्येभ्यश्चमुमुक्षु श्चेत्सदानप्रच्युतोभवेत्। केचिच्छिरोव्रतंप्राहुः केचिदत्याश्र मंबुधाः। अस्यव्रतस्यमाहात्म्य मागमांतेषुसंस्थितम्। इत्या दिवचनाद्यप्रोक्तभूत्युद्धूलन त्रिपुण्ड्रधारणव्रतस्यैवसर्वव्रतत्व सिद्धेः। पुरोक्तान्तर्गृहनीरीकरणादि दोषानपिभूतिधारणा त्मकमिदंव्रतंपरिमार्ष्टुं शक्नोतीत्यभिप्रायेणानन्तरमेवव्रतं वि धीयते। तत्रा प्यागतंसंशयंव्यपोहयति तद्धितपस्तद्धितपइति द्विरुक्तिः। तद्भूतिधारणमेवाहितपः हिप्रसिद्धौ द्विरुक्तिरा

दरार्थे । तस्मात्सर्वदोषपरिहारकारणे भूतिधारणसदुपाये सति तीक्ष्णवेदशासनभियान्यत्रनगन्तव्यं कीकटदेशेजनन बीजे । भवतु किंकुर्वे अहमुभयेभयकारणेसतीतिचेत् । सुतार्थिन्यास्त्रियस्सूतिबाधेवमुमुक्षो भैरवशिक्षाप्यल्पीयसीभवेत् । ततः काश्यामेवासनं स्थितिस्संपादनीया । कथंचिदासन्नपुत्रशोकदारिद्र्यादि विपन्नोपितदासनंनत्याज्यंकदापिनपरित्यजेत् । कुतएतत् यतोहमविमुक्त एव निवसताम्मोचकोस्मि । ततस्तदासनन्नत्याज्यमिति पूर्वेणसंबंधः । ननु श्रीचिदंबरवृद्धाचलादि शिवस्थानेष्वेवंतीव्रशासनाभावात्तत्रवर्तनमात्रेणनियमपूरणा तत् क्षेत्रवरणान्मुक्ताभवेमेति चेन्न । तत्राप्युपदेश काण्डादिशास्त्रेणन किंशास्यते । अत्र भैरवशिक्षात्वन्यत्राशिवस्थाने मृत्युशिक्षेत्येवंशिक्षकभेदः । न तुशिक्षाभेद इत्यर्थः । तस्मान्नाविमुक्तात्परमन्यत् श्रेष्ठं वास्थानं शिवस्यास्मिन् ब्रह्माण्डमण्डलेनास्त्येव तस्मादविमुक्तासनन्नत्याज्यमेव । तथाचपराशरपुराणे । अविमुक्तमिति ख्यातं क्षेत्रमस्तिममाव्ययम् । संसारविषदष्टानामगतीनांम हौषधम् । आधिभूतेतथा ध्यात्मेचाधिदैवेच संस्थितम् । पापानामपिसर्वेषां भवानिविनिवर्त्तकम् । अधिभूते स्थितोमायीय स्तुब्रह्माण्डविग्रहः । विराडात्माभ्रवोर्मध्ये सुस्थितन्तस्यसुव्रते । जीवानांव्यष्टिभूतानां सर्वेषान्तुतदाद्विजे । श्रीसूतश्च । अविमुक्तेमहादेवस्साक्षाद्विश्वेश्वरःप्रभुः ।उपास्यमानस्सुप्रीतोज्ञानं साक्षात्प्रयच्छतीति । तथाचाविमुक्तजाबालश्रुतिः । बृहस्पतिरुवाचयाज्ञवल्क्यमित्यारभ्य । अविमुक्तं वैकुरुक्षेत्रं देवानान्देव यजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्रक्व

चननगच्छतीतितादिदम्मन्येदेवानान्देवयजनं सर्वेषांभूतानां ब्रह्मसदनं । अत्राहिर्जतोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकम्ब्रह्मन्याचष्टे । येनासावमृतीभूत्वामोक्षीभवतितस्मादविमुक्तमेवनिषेवेताविमुक्तन्नविमुञ्चेद्‌विमुक्तन्नविमुञ्चेदिति । पराशरश्च कुरुक्षेत्रम्प्रसिद्धं यत्भूम्यांपापनिवर्तकम् । तदाश्रयफलञ्चापिलभतेस्यैवसेवया । देवानांदेवयजनम्प्रसिद्धमविमुक्तकं । सर्वेषामेवभूतानांतत्ब्रह्मसदनम्परम् । अन्यच्चपापसंघातनिवर्तकतयैवतु । प्रसिद्धंसर्वलोकेषु स्थानंतीर्थंचयत्प्रिये । इदमेवहितत्सर्वमविमुक्तंतदद्रिजे । अविमुक्तमिदम्मुक्त्वास्थानंसंसारनाशनम् । नान्यत्रनिवसेत्प्राज्ञः क्षणमात्रमपिप्रिये । अत्रैवोत्क्रममाणस्यजंतुमात्रस्यपार्वति । वेदवेदांतसारस्यप्रणवस्यास्यशङ्करि । ब्रह्मणस्त्वर्थ भूतोहंसंसारद्रावकोचिरात् अत्रैवमरणंसम्यग्यस्यासिद्ध्यतिदेहिनः । विज्ञानसाधनम्पूर्वंतेनसर्वमनुष्ठितम् । अविमुक्तमिदंस्थानम्वरणानासिसंज्ञितम् । यत्तध्येयम्विशेषेणयथेदमविमुक्तकम् । अन्येपिचतथाध्यात्मे भ्रुवोर्घ्राणस्यमध्यमे । प्रकाशमण्डलं शुद्धम्वरणानासिकाभिधम् । केवलम्भावनागम्यमुपादिश्यसुलोचने । तन्मध्येमामकंक्षेत्रमविमुक्तसमाह्वयं मोक्षसाधनविज्ञानसाधनत्वेनकेवलम् । प्राहुस्सर्वमुमुक्षूणामुपास्यत्वेनमामुमे । भ्रूवोर्घ्राणस्ययस्संधिस्तांधियामरनायिके द्युलोकस्यपरस्यापिसंधिरित्यपिभावयेत्।संधिसंज्ञचमामेवंसम्वित्भूतमुपासते । जाबालोपनिषत्साध्वीप्राणिनामादरेणतु । प्रधानसाधनान्या हममज्ञानस्यसिद्धये। अविमुक्तंममक्षेत्र म्मन्नामपरमंशुभम्। शतरुद्रीयसंज्ञंचतथा सन्यासमुत्तमम्। भस्मनो द्धूलनंतद्वात्त्रि पुण्ड्रस्यच धारणम्।

रुद्राक्षधारणं साक्षाच्छिवशब्द जपस्तत.। भस्मसंपादनं ध्या नंमैमव परमस्यतु । एतान्याहुःप्रधानानि साधनानिप्रियेण तु । एषुधर्मेषुय श्श्रद्धांनित्यं कुर्याद्द्विजोत्तमः । अचिराल्ल भतेज्ञानं संसारच्छेदकारणम् । एषुधर्मेषुयोधर्मो विकलोय स्यधर्मिणः । नतस्यब्रह्मविज्ञानं जायतेनहिसंशयः । एषुधमे षुचैकस्मिन्नि रतोयस्तुमानवः । सतस्यसर्वपापानां प्रायश्चि त्तंभवेत्प्रिये इत्यादिवचनशतै रविमुक्तन्नविमुञ्चेदेव। काशी खण्डेपि । नपापेभ्योभयं यत्रनभयं यत्रवैयमात् । नगर्भवा सभीर्यत्रतां काशींकोनसंश्रयेत् । यत्रकाश्यां शवत्वेपिजन्तु नाशुचितांव्रजेत् । ततस्तत्कर्णसंस्पर्शं करोम्यहमपिस्वयम् । मोक्षंसुदुर्लभंज्ञात्वासंसारंचातिभीषणम् । अश्मनाचरणौ भित्वा कालमत्र प्रतीक्षयेदिति । इतश्चाविमुक्तन्नविमुञ्चेद व । अनेनवचनसन्दर्भेण क्वस्थातव्यमितिभूसुण्डप्रश्नस्याकिं चिद्देवोत्तरमासीत् । इतिभस्मजाबाल श्रुतौचतुर्थब्राह्मण विवरणेद्वितीयःखण्ड ॥

शिवमस्तु ।

मूलम् । काश्यांस्थानानि चत्वारि तेष्वभ्यर्हितमविमुक्तम् । तत्राप्यभ्यर्हितमन्तर्गृहम् । तत्रप्राच्यामैश्वर्य स्थानं दक्षिणायान्दिशि वैराग्यस्थानम् । पश्चिमायान्दिशि ज्ञानस्थान मुत्तरायान्दिशि विलासस्थानम् । तस्मिन्यदन्ता व्ययमे

नाद्यन्त मशेषवेदान्तवेद्यम् । अनिर्देश्य मनिरुक्तमप्रधर्ष्यमाशास्य मद्वैतंसर्वाधा र मनिरीक्ष्यम् । अहरहर्ब्रह्मविष्णु पुरन्द राद्यमरसे वितम्मामेव ज्योतिर्लिंगस्व रूपन्तदेवोपासितव्यम् । नैवभासयति तल्लिंगं भानुश्चन्द्रोग्नि र्वायत्प्रकाशांविश्वे श्वराभिधमापाताल मधितिष्ठति । तदे वाहन्तत्रार्च्चितस्साक्षात्त्रिशाखैर्बिल्वदलैः पत्रैर्वापयोभिरभिषि च्यसंपूजयेत् । मन्म नामय्याहि तासुमेय्य वार्पिताखिलकर्मा । भस्मादिग्धांगोरुद्राक्षभूषणोमामेवप्रपन्नो मदेकपूजानिरतस्सं पूजयेत् । तदहमश्ना मितम्मोचयामि संसृतिपाशात् । अहरह रभ्यर्च्यवैश्वेश्वरं लिंगंरुद्रसूक्तैरभिषिच्य । तदेवस्नपनं पयस्त्रिःपीत्वा महापातकेभ्यः प्रमुच्यतेनशोकमाप्नोतिमुच्यते संसारबं धनात् । तदनभ्यर्च्चनाश्नी यात्फलमन्नम न्यद्वा । यदश्नीयाद्रेतो भक्षीभवेन्नापः पिबेद्यदि पिबेत्पूयपोभवेत् । प्रमादेनैकदा

त्वन भ्यर्च्यमांभुक्त्वा भोजयित्वावा । केशा न्वापयित्वागव्यानांपंच संगृह्योपोष्य । जलेजपेत्त्रिवारं रुद्रानुवाक मादित्यंपश्य न्नभिध्या यन्स्वकृतकर्म । ततोरौद्रैर्मन्त्रैः कुर्यान्मार्जनं भोजयित्वा ब्राह्मणान्पुतोभ वति अन्यथापरेतोया तनामश्नुते । पत्रैः फलैर्जलैर्वाभिपूज्य विश्वेश्वरं लिंगन्ततो श्नीयात् ॥

## विवरणम् ।

काश्यां शिवस्य स्थानानिमुख्यानि नाममानचिन्हैः प्रविभक्तानि चत्वारि संति । तेषु चतुर्षु स्थानेष्वभ्यर्हितं श्रेष्ठंप्रशस्ततमम् । तथाहि सत्येसाधौविद्यमाने प्रशस्तेभ्य र्हितेचसदिति । नि । तेषुस्थानेष्वविमुक्तं प्रशस्तमिति । तत्रापिततोऽभ्य र्हितमन्तर्गृहम् । वृष्टिवातातपक्लेशपरिहारार्थं वा सुदूरयातायातपरि श्रमविश्रान्त्यैवाजनै र्यथादरेणगृह्यते गृहं तथेदमन्तर्गृहम् । गर्भजन्मजरामरणनिरययातायातसुचि रदूयमानैः प्रसादतः काशीसमागतैर्जन्तु भिरंतर्गृह्यतेस्वीक्री यते इदमिति अन्तर्गृहमित्यर्थः । नन्वेवमुक्तेपिशिवस्थानल क्षणन्नस्फुटीकृतमेवेति चेदुच्यते । पाद्मे चतुर्विधेपिक्षेत्रे स्मिन्मृतश्चेद्गर्भयातनाम् । नैवाप्नोतिमुनिश्रेष्ठाविशेषोत्रब्रूवी मिव । चतुर्धावित तेक्षेत्रेसर्वत्रभगवान्शिवः । आचष्टेता

रकंवाक्यं ब्रह्मात्मैक्यप्रबोधकम् । काश्यांमृतस्तुसालोक्यं साक्षाद्प्राप्नोतिसत्तमः । वाराणस्यांमृतोजंतुस्साक्षात्सारूप्यमश्नुते । अविमुक्तेविपन्नस्तुतत्सान्निध्यमवाप्नुयात् । अंतर्गृहे विपन्नस्तुसाक्षात्कैवल्यमश्नुते । परिमाणं चवक्ष्यामितन्निबोधतसत्तमाः । मध्यमेश्वरमारभ्ययावद्देहलिविघ्नपः । सूत्रंस्थाप्य चतुर्दिक्षुभ्रामयेन्मण्डलाकृति । तत्रयाजायते रेखा तन्मध्यंक्षेत्रमुत्तमम् । श्रीकाशीतिविदुर्देवास्तत्रमुक्तिः प्रतिष्ठिता । काश्यंतः परंक्षेत्रंविशेषफलसाधनम् । वारणासीतिविख्यातंतन्मानंनिगदामिवः । दक्षिणोत्तरयोर्नद्यौवरणासीचपूर्वतः । जान्हवीपश्चिमेचापि पाशपाणिविनायकः । अनयोरंतरंदिव्यम शेषफलसाधनम् । अविमुक्तमितिख्यातं तन्मानंचब्रूवीमिवः । विश्वेश्वराच्चतुर्दिक्षु धनुश्शतयुगोन्मितम् । अविमुक्ताभिधक्षेत्रम्मुक्तिस्तत्रनसंशयः । गोकर्णेश :पश्चिमेपूर्वतस्तु गंगामध्यंचोत्तरेभारभूतः ब्रह्मेशानो दक्षिणेसुप्रतिष्ठस्तत्तुप्रोक्तंभवनंविश्वभर्तुः॥ इतिशिवस्थानचतुष्टयलक्षणमुक्तम् ॥

तत्रविश्वेश्वरान्तर्गृहेतद्वारीत्यर्थः । प्राच्यान्दिशिमूर्तिमन्निरतिशयैश्वर्यस्य स्थानंमूर्त्तिमान्निरतिशयैश्वर्यंविराजतेइत्यर्थः । तथाचदक्षिणायां दिशिश्रीमदघोरमुख सन्निधौवैराग्यस्थानम् । अतएवश्रीशिवस्य दक्षिणमुखसंश्रय वतामस्मत्गोत्रीयभरद्वाजर्षिप्रभृतीनांवैराग्यातिशयोपिक्वचित्क्वचित्दृश्यतइति वैराग्यस्थानमेवतत् । पश्चिमायांदिशि ज्ञानस्थानं पश्चिमाभिमुखं लिंगमभिन्नवलयाकृति । त्वंपूर्वाभिमुखोभूत्वापश्यपश्यमहाद्भुतमितियोगशास्त्रेप्रत्यङ् मुखीकरणोपायत्वेनोपदेशात् [illegible]मित्येतदुपयुक्तमेव । अपिचप्रश्चि

माभिमुखान्तर्लिंगस्य भ्रूमध्येनुसंधानात् शिवज्ञानमुदेतीति शास्त्रप्रसिद्धेः। तथोत्तरस्यान्दिशिदीव्यमानस्य वामदेवमुख स्यश्रगौरीरूपत्वात्तत्रमहेशस्य विलासस्थान मुचितमेव । एवमेषोविक ल्प्यभ्रान्त्याविलपितः केवलांशि वरहस्यार्थः कोवानविज्ञायते तस्मिन्यदंतरव्ययमित्यादिविशेषणविशि ष्टंतन्मध्यगतं ज्योतिस्वरूपं यत्तदेवविद्वद्भिरुपसितव्यम् । दृश्यंस्थूलंलिंग म्मादृशैरर्चनीयम् । शिवप्रसादिभिर्ज्योतिर्लि गमेवोपासितव्यम् । तद्भान्वादीनितेजांसि प्रकाशयितुन्न शन्कुवन्ति । तत् स्वयंज्योतिः । अन्यत्तुभौतिकमित्यर्थः । तदापातालमधितिष्ठति पातालशब्देनैवाधस्तादूर्ध्वन्तिर्यक् चसर्वं व्याप्याधितिष्ठति सर्वाधारत्वादित्यर्थः । तदुक्तंप रमेश्वरेण । ब्रह्माहरिश्चभगवानाद्यन्तन्नोपलब्धवान् । तथान्येचसुरास्सर्वे तदनन्तोहमीरितइति । तथाचश्रुतिः अ थकस्मादुच्यतेऽनन्तः। यस्मादुच्चार्यमाण एवाद्यन्तन्नोपलभ्य तेतिर्यगूर्ध्वमधस्तस्मांदुच्तेऽनन्तइति । अपरिच्छिन्न चैतन्यस्व रूपमित्यर्थः । तदेवाहंतत्रार्चितोहंबिल्व पत्रादिभिः फलैर्व न्यैर्नागरिकैर्वा पयोभिः क्षीरैर्जलैर्वा । नहिविश्वेश्वरपूजायां हिमांबुपीतांबरमाणि भूषणादिमहार्हद्रव्या णिविधीयन्ते । य तोकिंचिनजनादूरीभवन्ति किंतुपत्रैरपामार्गनिर्गुण्डीतुलसीबि ल्वमुख्यैः। नद्यांस्त्रवद्भिर्जलैरन्यैरल्पद्रव्यैः कथमपिविश्वेशम भ्यर्च्यततोश्नीयात्अत्रकेचिदलसाआहुः। संपूर्णशिवमाराद्धुं यतन्तोपितत्सामग्रीचिकीर्षया । अपराध्यन्त्येवतद्बाह्मपूजा मास्तु। आत्मपूजासमानास्ति पूजारघुकुलोत्तमेतिशिव सूक्त्या ॥ोस्थितिरेववरिष्ठेति ।तथास्वान्नपानादौयदितिष्ठसिकिं ।

श्रीमदगस्त्यः । चंदनंबिल्वकाष्ठस्यपुष्पाणिवनजान्यपि फला नितादृशान्येवयस्य प्रीतिकराणिवै । दुष्करंवस्यसेवायां किम स्तिभुवनत्रये । वन्येषुयादृशीप्रीतिर्वर्त्ततेपरमेशितुः । उत्तमे ष्वपिनास्त्येवतादृशीग्रामजेष्वपि । तन्त्यक्त्वाता दृशंदेवंयः सेवेतान्यदेवताः । सतुभागीरथींत्यक्त्वा कांक्षतेमृगतृष्णिका मिति । वायुसंहितायाम् । नद्यांचसिकतावारिवनेषु सुलभं सुमम्।नास्त्येवकरणक्लेशः कर्त्तव्यस्सकृदंजलिरिति तस्माद्य श्चाकथंचिद्दीनसुलभम् शिवमभ्यर्च्चयेंवततोश्री यादितिसिद्ध म् । पुनश्श्रुतिश्शासयति । यदिशिवमनभ्यर्च्चर्यफलमन्नंपत्रं वायदश्नीयात्सतुरेतो भक्षिपूयपश्चभवत् । प्रायश्चित्तंप्रमादेन एकदासकृद्वा अनभ्यर्च्चयेमां स्वयंभुक्त्वावासंबंधिस्याला दीन्परान्भोजयित्वावा। नियतशिवार्चनहीनान्भोजयित्वा वायोमर्यादामतिक्रामति सद्दिनमेकमुपोष्यस्वकृता घमोचना र्थंसूर्याभिमुखोजलेतिष्ठन् श्रीरुद्रमन्त्रनावृत्यशिवभक्तायगो मूल्यन्दत्वाशुद्धोभवति ॥

मूलम् ॥ कापिलेन पयसारुद्रसूक्ते नाभिषिच्यमामेव शिवलिंगरूपिणं ब्रह्म हत्यायाःपूतोभवति कापिलेनाज्येनाभि षिच्यसुरापानात्पूतोभवति । कापिलेन दध्नाभिषिच्य स्वर्णस्तेयात्पूतोभवति । मधुनाभिषिच्य गुरुदारगमनात्पूतोभव ति । सितयाभिषिच्य सर्वजीववधात्पू

तोभवति । इदमेवैकं महाप्रस्थशतमानै
रभिषिच्य मुक्तोभवति संसारबन्धनात् ।
मामेवशिवलिंग रूपिणमार्द्रायां पौर्णिमा
स्याममायांवा । महापाते गृहणेसंक्रा
न्तौवाभिषिच्यतिलैस्सतण्डुलैः सयवैस्सं
पूज्यनवैर्बिल्वदलैरभ्यर्च्चर्य कापिलेना
ज्येनधूपदीपादीन्परिकल्प्य । तैनैवसाज्य
मुपहारंकल्पयित्वा । पुनर्धूपदीपांश्च पु
ष्पांजालिमेवं प्रयतोभ्यर्च्चर्य ममसायुज्य
मेति । शतैर्महाप्रस्थैरखण्डैस्तण्डुलैर
भिषिच्य चन्द्रलोककामश्चन्द्रलोकमवा
प्नोति । तिलैरेता वाद्भिरभिपूज्यवायु लो
कमवाप्नोति । माषैरेतावाद्भि रभिपूज्य
वरुणलोक मवाप्नोति । यवैरेतावाद्भिर
भिपूज्य सूर्यलोकमवाप्नोति एतैस्स
वैरेतावाद्भिरभिपूज्य स्वर्गलोकमवाप्नो
ति । एतैस्सर्वैरेतावद्भिर्द्विगुणैरभ्यर्च्य
ब्रह्मलोक मवाप्नोति । एतैरेतावद्भिश्चतु
र्गुणैरभ्यर्च्यविष्णुलोक मवाप्नोति । एतै

रेतावद्भि रेवशतगुणैरभ्यर्च्य । चतुर्जालं ब्रह्मकोशं यम्मृत्युर्नावपश्यति । तमती त्यमल्लोककामोमल्लोक मवाप्नोति । नान्यन्मल्लोकात्परं काम्यंयमवाप्यनशोचति । नसपुनरावर्तते नसपुनरावर्तते । लिंगरूपिणम्मामेव चिन्तयन्तिसिद्धायोगिनश्चमांय जन्तियज्वानः । मामेव स्तुवन्तिवेदास्सांगास्सोपनिषदस्सेतिहासाः । नमत्तोन्यदहमेव सर्वंमयिसर्वं प्रतिष्ठितम् । ततःकाश्यांप्रयतैरन्वहमहमेवाभिपूज्यः । इतिश्री भस्मजाबाल श्रुतौ चतुर्थ ब्राह्मणे त्रितियःखण्डः ॥

शिव मस्तु ।

---

## विवरणम् ।

प्राग्विश्वेश्वरमभ्यर्च्यपश्चादेवफलं जलमन्यद्वाश्नीयादित्यनुशासितम् । अत्ररहस्यप्रकाश कृतमहापातकप्रायश्चित्त चिकीर्षूणांपश्चात्तापिनामिदमुच्यते । कापिलेनपयसाकृष्णो धवतीगौः कपिलातस्याइदंकापिलंपयः तेनपयसा श्रीमहालिंगमभिषिच्यरुद्रसूक्तैः परिणोरुद्रस्येत्यादिमन्त्रैः यद्वा ।

अतोराजातद्रवर्गाज्यदोहदेवष्टतानि एकादशसामानितैर भिषिच्यब्रह्महत्यायाः पूतोभवति। कापिलेनाज्येनाभिषिच्य सुरापानात्सुरापानरूपाघादपिपूतोभवति । सर्वे पापेभ्यो पिमहापातकानिप्रबलानि । तेष्वप्ययं सुरापानदोषएवप्रब लइतिघोघुष्यतेशास्त्रेषु। तथाचपराशरः सुरापानस्यपापस्यब्र ह्महत्यादिपातकं । सत्यमेवमयाप्रोक्तंकलांनार्हन्तिषोडशी म्। अभक्ष्यमपिभक्ष्यंस्यादौषधार्थं तुरोगिणाम् । अन्तरेण सुराद्रव्यमित्याहपरमेश्वर इति। सुरापानदोषोत्यन्तपतनहे तुरेवतमपिसुरापायिनं कापिला ज्येनमहालिंगाभिषेकस्सद्य एवपावयते । कापिलेनदध्नाभिषिच्यस्वर्णस्तेया त्पूतोभव ति। मधुनाभिषिच्यगुरुदारगमनात्पूतो भवति। सितयाश र्करयाभिषिच्य सर्व जीवधात्पूतोभवति । इदमेवैकंद्रव्यस्म हाप्रस्थशतमानैरभिषिच्यमुच्यते संसारबंधनात् । किंच तत्तल्लोक कामानांतत्तल्लोकप्रापकोभिषेकद्रव्यविशेषउच्यते। मामंत्रलिंग रूपिणमार्द्रायांपौर्णिमास्याममायांवामहापातेव्य तीपाते संक्रांतौवाभिषेच्यातिलैस्सतण्डुलैर्वासयवैर्म्तिलैर्वा संपूज्यनवैः कोमलबिल्वपल्लवैरभ्यर्च्यकापिलाज्यगंधसारधू पदीपाद्युपरिकल्प्यतेनैवसाज्यमुपहारमन्नभक्ष्या दिकल्पयन् पुनर्धूपदीपादिभिः प्रयतोभ्यर्च्यममसायुज्यमेति। ननुलोके षोडशेकृत्विग्भिर्यजमानपत्नीभ्यामन्यैः कार्यकर्तृभिरनेकैः प्रभूतविक्त्व्ययैर्बहुभिरहोभिर्द्विजादिभिः कृच्छ्रेणनिर्वर्त्यमा नेनश्रौतेनाग्निष्टोमादिकर्मणापिप्राप्यंस्वर्गफलमेव । नतुतदुप रि।। कथं सतण्डुलयवार्घाभिषेकेन बिल्वपल्लवार्चनेनवादे वमाराधयतांर्वेषामपि शिवसायुज्यमुक्तिर्भवेदितिचेच्छृणु।

शिवयजनतदर्चनरूपकर्मणोर्वेदविहितत्वेपि केषांचित्कामि
नांमखादौ विश्वासोभवति । तेनतत्कुर्वते । तत्फलंचाप्नुव
न्ति । क्रियाकाण्डेग्निष्टोमादिपठ्यते । तत्राधिकारीबुभुक्षुः।
अत्रज्ञानकाण्डेशिवज्ञान सन्निहितसाधनप्रदर्शनोद्योगिन्याम
स्यांभस्मजाबालश्रुतौ महालिंगोपासनंविहितम् । अत्रकदा
केनोपायेनमुच्येयमिति सर्वतोविरज्यलिंगोपासकोमुमुक्षुरेवा
धिकारी तेडांभिकावयं यज्वानोवाजपेययाजिनइति अहंका
रग्रन्थिलहृदयाभवन्ति । लिंगोपासकास्तुसर्वतोनिर्विण्णा
श्शान्ताअविमुक्तमाश्रित्योपवसन्ति । कर्मिणो निन्दन्तिशि
वाराधकानउपासकान्निन्दान्तिकर्मठान् । तथाचश्रुतिः । इष्टा
पूर्त्तमन्यमानावरिष्ठं नान्यच्छ्रेयोवेदयन्तेप्रमूढाः । नाकस्यपृ
ष्ठेसुकृतेतेनुभूत्वेमंलोकंहीनत रंवाविशन्तीति । तपश्रद्धेयेह्युपप
वसन्त्यरण्येशान्ताविद्वांसोभैक्षचर्यांचरन्तः । सूर्यद्वारेणतेवि
रजाः प्रयान्तियत्रामृतस्सपुरुषोह्यव्ययात्माइति उभयत्रवेदो
क्तत्वेकर्त्तव्यत्वेच समानेपिकर्मज्ञानभेदेन तयोर्वृत्तिभेदाद
धिकारिभेदात्फलभेदश्रवणाच्च यथाश्रुतमंगीकार्यमेववैदि
कैः । अदृष्टपूर्वस्वर्गादिर्यथावि श्वस्यकर्मणानिर्वर्त्यतेतथाशिव
सायुज्यमपिश्रौतेनकर्मणानिर्वर्त्यतएवेत्यर्थः । तमेवंविद्वान
मृतत्वमेतिनान्यः पन्थाअयनायविद्यते इतिश्रुतेर्विरोधइतिचे
न्न । लिंगोपासनंलोके गुरूपसदनप्रत्सकलमूल देशिकसमा
श्रयः महावाक्योपदेशवदत्रतार कब्रह्मोपदेशः । तत्रकेचिन्मु
च्यन्तेअत्रसर्वेपिमुच्यन्तएवालमतिभाषणेन । एवंप्रयतोभ्य
र्च्यममसायुज्यमेतीतिशिवशासनं प्रसाधनमेव । पुनस्तत्तल्लो
ककामिनामुपदिशत्युपायम् । अखण्डैर्महाप्रस्थशततण्डुलैश्च

न्द्रलोकम्। तिलैरेतावद्भिर्वायुलाकम। माषैरेतावद्भिर्वरुण लोकम् । यवैः सूर्यलोकं सर्वैरेतावद्भिस्स्वर्गलोकम् । एतैरेतावद्भिर्द्विगुणै ब्रह्मलोकम् । एतैरेतावद्भि श्चतुर्गु णैर्विष्णुलोकमवाप्नोति । एतैरेतावद्भिरेवशतगुणै रभिपूज्य चतुर्जालंब्रह्मकोशंचतसृषु दिक्ष्वपिजालंसुषिरशतम स्यप्रा वरणस्यास्तीतिचतुर्जालम्। गवाक्षसदृशावरणयुक्त मित्य र्थः। किन्तत् । ब्रह्मकोशंब्रह्मणः परमेश्वरस्यकोश इव कोशः। असेर्नीडवत्। अब्जकोशवद्वा। इदमेवशिवस्थानं श्रुतिभिर्विविधमीर्यते। योवैतांब्रह्मणोवेद अमृतेनावृतांपुरी म्। तस्यांहिरण्मयः कोशः। पद्मकोशप्रतीकाशंहृदयंचाप्य धोमुखम्। पुरमेकादशद्वारमजस्यावक्रचेतसः। योवेदनिहि तंगुहायांपरमेव्योमन्निति। इत्यादाविदमेव शिवनिकेतनमेव प्रशस्यते। एवं भूतं शिवान्तः पुराऽपरपर्यायंब्रह्मकोशम्। सकिं प्रभाव इत्यत आह। यंब्रह्मकोशंमृत्युस्सर्व संहार्यपि अद्यापिनावपश्यतिमृगेन्द्रगुहाद्वारं हरिणाभकवन्मृत्युंजयस्य मन्दिरद्वारन्नावपश्यत् बिभेतीत्यर्थः । तदेवब्रह्मपुरंमहत्सो मलोकाख्यंपरशिवपुरं श्रीकैलासंवास्वाधिकारानुरोधेन आ प्नोति। यंलोकमवाप्य पुनर्नशोचतिजन्तुः। तस्मान्मल्लोका दन्यत्परंश्रेष्ठन्नास्ति। यस्मादेवंशिवाराधनमहिम्नाकश्चिच्छि वपदंयाति। सपुनर्जन्मभूमिन्नावर्त्तते नावर्त्ततएवायत श्रीकै लासः कामिनाम्मन्द फलदोपिमुमुक्षूणांनित्यनिरतिशयपर मानंदरूप एव भवति। इतः परमुपासावैविध्यमुपदिश्यते। लिंगरूपिणम्मामेवचिंतयंतिसिद्धाः परकायप्रवेशादि साम र्थ्यवंतः योगिन उपायेनप्राणधारणेन पंचभूतधारणयाभूम्यं

ब्वादिषुतत्तद्रूपेणावस्थानवैचित्र्यशक्तिमन्तः। यज्वानोमामे वयजंति सांगास्सोपनिषद स्सेतिहासावेदामामेवस्तुवंति। तस्मान्नमत्तोन्यत् स्तोत्रार्हंवस्त्वस्ति। अस्तीतिचेत्। अधि ष्ठानेमयि सर्वमारोपितमिवयथैकस्यामेवरज्जौभूविवरस्रक्द ण्डनीरधारामाल्यकल्पनवदित्यर्थः। ततः प्रयतैस्स्वाधीन चित्तैरस्यांकाश्यामहमेवाभिपूज्यः। नान्यः पूज्योस्तीत्यर्थः।

इति श्रीभस्मजाबालश्रुतौ चतुर्थब्राह्मण विवरणे त्रितीयः खण्डः॥

श्रीशिवमस्तु।

---

मूलम्। तत्रगणारौद्रानानामुखा नानाशस्त्रास्त्रधारिणोनाना रूपधराः। नानाचिह्निनतास्ते सर्वेभस्मदिग्धां गारुद्रा क्षाभरणाःकृतांजलयोनित्यं ध्यायन्तस्स न्ति। तत्रपूर्वस्यान्दिशि ब्रह्माकृतांजलि रनिशमुपास्ते। दक्षिणस्यान्दिशि विष्णु रहर्न्निशंकृतमूर्धांजलिम्मामुपास्ते। प्रती च्यामिन्द्रस्सन्नतांगउपास्ते। उदीच्याम ग्निमुखारक्तांगारक्तकायाहेमांगाहेमभूष णाहेमवस्त्रास्समुपासते। मामेववेदाश्च

तुर्मूर्त्ति धराऽपासते । दक्षिणायान्दि
शि मुक्तिस्थान न्तन्मुक्ति मण्डपसंज्ञितम्।
तत्रानेकगणाःपालकास्सायुधाः पापघातु
काः। तत्रषंय श्शांभवाःपाशुपता महाशै
वामय्यर्पि तमनोधियः ॥ निराहाराजिते
न्दि यामामद्वैत श्चतुर्थमेकमाशास्यम् ।
उपास्यंशिवंसंसा रमोचकं ध्यात्वावस
न्ति । रुद्रसूक्तपरायणावेदावतंसंशैवंपंचा
क्षरं सप्रणवन्तारकं जपन्त स्सन्तोमोद
मानास्तिष्ठन्ति ॥

## विवरणं ।

तत्रेति चतुर्जालंब्रह्मकोशमिति यच्छिवस्थानमुक्तंतत्रग
णाः।शतंसहस्रमयुतमिति भटागण्यन्तेसंख्यायन्ते इतिगणाः।
रौद्राभीषणाश्श्रीरुद्रायत्तावाश्रीरुद्र समानरूपावा। नाना
मुखास्सृगालसरमाभल्लूक तरक्षुवलीमुखमुखाः। नानाशस्त्रा
स्त्रधारिणः। नानारूपधराः नानारूपाणिप्रतिक्षणंधरंतीति
तथोक्ताः नानाचिह्निताः चह्यतइतिचह्लतीतिवाचिह्नम् ।
चिह्नंलक्ष्मचलक्षणमिति नि। चहपरिकल्पनेइतिधातोः ।
स्वस्वकवचोपरिमुद्रित सुवर्णपालिकाः । अयंपंचोत्तरशत
नियुतसंख्या कोधनकोशभटः। अयमेतत्संख्याकोलेखवाह

कः । अयंकलाचीधरोदासइति अयंसन्निहितदासाधिप इति तत्तन्मुद्रांकिताइत्यर्थः । अथाप्येतेसर्वेभस्म दिग्धांगा रुद्राक्षाभरणाः कृतांजलयोनित्यं कर्त्तव्यतालेशाभावाच्छिवं ध्यायन्त स्सन्ति । तत्रब्रह्मकोशेब्रह्माकृतांजलि रनिशमुपास्ते उपसमीपेअत्रविशेषणांतराभावादत्यंत सामीप्यमवगम्यतेत च्चाऽत्यन्तसामीप्यंप्रत्यक्चैतन्यस्यपरमेश्वरस्यैवभवितुमर्हति। तथाचोक्तंवार्त्तिकसारे । उपोपसर्ग स्सामीप्येतत्प्रतीचिसमा प्यते । सामीप्यतारतम्यस्य विश्रांते स्वात्मनीक्षणादिति । तस्मात्तत्तेजः पुंजंब्रह्मकोशांतर्भासमानं शिवचैतन्यंप्रत्यगात्म चैतन्येनतदात्मनाएकीकृत्यब्रह्मा ब्रह्मरूपेणैवास्तेइत्यर्थः।तथा दक्षिणायांदिशिविष्णुः कृतमूर्धांजलिरहर्निशंमां प्रत्यगात्मना एकस्वरूपतयोपास्ते । प्रतीच्यांदिशींद्र स्सन्नतांगः पातित दण्डवत्सदामामुपास्ते । उदीच्यांदिशि अग्निमुखाअग्निव च्छोणवर्णमुखाः वामदेवस्यगणाः पारिषदइत्यर्थः । रक्तांगा रक्तकायाः कायांगशब्दयोरेकार्थत्वेपि हस्तांघ्रितललोचन केशेषुवर्णभेदसत्वात्तदपिते षान्नास्तीतिव्यंजितम् । हेमांगाहे मभूषणाहेमवस्त्रामामुपासतइति । मामेववेदाश्चतुर्मूर्त्तिधरा स्संतउपासते । तद्दक्षिणायांदिशि मुक्तिस्थानंमुक्तिसत्रशाला तन्मुक्तिमण्डपसंज्ञितम् । तत्रब्रह्मकोशस्य परितोऽनेकगणा स्सायुधाःपालकाःपापघातुकास्समुपासते । किंचतत्रऋषयः। ऋषंतिजानंतिसर्वमितिऋषयइति शांभवाःपाशुपतामहाशैवाः ।

मय्यर्पितमनोधियः निराहाराजितेंद्रिया स्संतः । माम द्वैतं उपासकस्यजगतश्चाभिन्नं चतुर्थविश्वादित्रयातीतंतदधि ष्ठानभूतमित्यर्थः । एकंपरमार्थतआशास्यं सर्व प्रत्यक्त्वे

नात्मतयापरमप्रेमास्पदम् । उपास्यं सर्वप्रतिबंधनिवृत्तये शिवंस्वप्रकाशं संसारमोचकम्मामेवध्यात्वावसंति । अपिचते सर्वेरुद्रसूक्तपरायणा वेदावतंसंशैवंपंचाक्षरं सप्रणवन्तारकं जपंतोमध्येमध्येमोदमाना अहोभाग्यंभुविकातिवानसंतिजंतवः ।अहंदैवान्मानुष्यंजग्म । ततोप्यविमुक्तंततोपितारकंपंचाक्षरंचदैवादभजं नाहमितोधःपतिष्ये इति सन्ततम्मुदितांतरास्तिष्ठंति ॥

मूलम् । तत्रैकारत्न वेदिकातत्रा ह्मासीनः काश्यांत्यक्तकुणपान् शैवाना नीयां केस्वस्यैवसंवेश्य । भसिताक्ष भूषिता नुपस्पृश्यमाभूदेषां जन्ममृत्यु श्चेति तारकं शैवंमनुमुपादिशामि । ततस्तेमुक्ता मामनुविशन्ति विज्ञानमयेसां बेनपुनरावर्त्तंते हुताशप्रविष्टं हविरिव । तत्रैवमुक्त्यर्थ मुपादिश्यते शैवोमंत्रः पंचाक्षरस्तन्मुक्ति स्थानन्तदों काररूपम् । ततोमदर्पितकर्मणा म्मदाविष्टचेत साम्मद्रूपता भवति नान्येषामियंब्रह्म विद्येयं ब्रह्मविद्येयम् । मुमुक्षवः काश्यामेवासीनावीर्यवन्तोविद्यावंतो विज्ञानघनं ब्रह्मकोशं चतुर्जालंयंमृत्यु नावपश्यति । यंब्रह्मानाव

पश्यतियमिन्द्राग्नी नावपश्यतः। यंवरू
णादयो नावपश्यान्ति तमेवतेजःपुंजमुमां
संश्लिष्यवसन्तं चन्द्रकोटि समप्रभंचंद्र
किरीटम्। सोमसूर्याग्निनयनंभूतिभूषि
तविग्रहम्। शिवंमामेवाभिध्यायंतः। मु
क्तकिल्बिषामुक्तबंधामय्येवलीनाभवंति।
येचान्येकाश्यांपुरीषकारिणः प्रतिग्रहरता
स्त्यक्तभस्मधारणास्त्यक्तरुद्राक्षधारणाः।
त्यक्तसोमवारव्रतास्त्यक्त विश्वेश्वरार्चना
स्त्यक्तान्तर्गृहयात्राः। त्यक्तपंचाक्षरज
पास्त्यक्तरुद्रजपास्त्यक्तभैरवार्चनाः। भै
रवींघोरांयातनांकाश्यांपरेताभूत्वानुभूय।
ततश्शुद्धामांप्रपद्यंते। येचांतर्गृहेरेतोमू
त्रपुरीषंवाविसृजंतिमोहात्भ्रमेणवा।तेम
मैवांतस्तनोः कुर्वंतितत्सर्वमनंतयातना
बीजमेवभवति। यदारेतोमूत्रपुरीषंवावि
सृजंत्यन्तर्गृहेतदातेनासिंचतेपितॄन्। त
मेवपापकारिणम्मृतं पश्यन्नीललोहितोभै
रवस्तंपातयत्यस्त्रमण्डलेज्वलत् ज्वलनकु

ण्डेष्वन्येष्वपि । ततश्चाप्रमादेननिवसे काश्यां लिंगरूपिण्याम् । भस्मगायत्री। 'सद्योजातायविद्महे महादेवायधीमही । तन्नोघोरः प्रचोदयात् । सिद्धंब्रह्मपरं ज्योतिस्स्वयमानन्दविग्रहम् । वियदादि महाभूतविज्ञातृत्वेनभासते । यइमामुप निषदंब्राह्मणोवाक्षत्रियोवानित्यमधीते । अश्रोत्रिय श्शोत्रियो भवत्यनुपनीतउप नीतोभवति । ससर्वैरनुध्यातोभवतिसस र्वेषुवेदेष्वधीतोभवति। सोग्निपूतोभवति सवायुपूतोभवति । ससत्यपूतोभवतिस सर्वपूतोभवति। तदर्थावधारणात्सर्वेषुती र्थेषुस्नातोभवतिसर्वैः क्रतुभिरिष्टंभवति। अथकालाग्निरुद्रः प्रोवाचशिवएकोध्येय श्शिवंकरः।सर्वमन्यत्परित्यज्यैनामधीत्य गर्भवासान्मुच्यतइत्योंसत्यम् । भद्रंकर्णे भिरितिशांतिः ।

श्रीशिवमस्तु।

इति श्रीभस्मजाबालोपनिषन्मूलं संपन्नम्।

शिवमस्तु। तारकेश्वराय नमः ॥

# विवरणम् ।

तत्रदक्षिणद्वारस्थमुक्ति मण्डपएकामुख्यारत्न मयीवे दिकास्तेविराजते रेजंतत्रइदं सकलजनहितंकिं चिदपारकृ पयाकेवलमुपदिशामीति सम्रूक्षोध्याह । तत्रतस्यांवेदिका यामहमासीनः श्रीकाश्यां पंचक्रोशांतरालेयत्रकुत्रापिदृ क्तकुणपान्कुणपः पूतिगंधेशवेपिचेतिविश्वः ।क्वणतीतिकुण पः क्वणशब्देअयमर्थः श्रीकैलासमूलवल्दाधिकारि कमेत गणविषयेमुख्यार्थः । प्राणविमुक्तदेहेतु घोररूपत्वसाम्या ल्लक्षणयावर्त्तत इत्यदोषः ।त्यक्तः कुणपः प्राणहीनः प्रेतः यैस्तेत्यक्तकुणपास्तान् शैवानुक्तवक्ष्यमाणभूत्यक्ष धारणादि नियमपरान् तानानीयस्वगणै स्स्वस्यैवांकेसन्निवेश्यतथा चाशुद्धानपिभैरवाशि क्षयाक्षपितमलान् कृत्वांकेनिवेश्यत तश्चाभयविधान् सद्यएवगणैर्भासिताक्ष भास्वरान्कारयित्वा तानुपस्पृश्यादरेणश्रीहस्तेनदीक्षार्थंपरिमृश्य माभूदेषांजन्मम् त्युश्चेतः परमितितारकं शैवषडक्षरम्मनुमुपदिशामि मन्त्रार्था त्मकंशिवरूपमेव उपअत्यन्तसमीपे लोकांतरगतिप्रयासंविनै वदिशामीतिदास्यामीत्यर्थः । ततउपदेशानन्तरं स्वयंशुद्धाः कृतशुद्धाश्चजन्तवो भवबन्धान्मुक्ता स्सन्तोमामनुविशन्ति । कृतोपदेशनतेसर्वे अखण्डसच्चिदानन्द शिवमेवाहमस्मीति विदित्वाअनुतत् क्षणादेवमांविशन्ति मदेकात्मना भवन्ती त्यर्थः । नतुवन्हौपतंगसंघवत् ।पुनः कथमित्यतआह । सांबे शक्तिशबलिते ब्रह्मणिच्छायापुरुष वत्स्फुलिंगाग्निवत्बिंब प्रतिबिंबवच्चैकीभवंति । श्रुतिश्च येपूर्वेदेवाऋषयश्चतद्विदुस्ते

तन्मयाअमृतावैबभूवुः । ब्रह्मवेदब्रह्मैवभवति तत्सायुज्यं दृष्टान्तेनदृढयति । यथाहुताशेप्रविष्टं यजमानेनहुतंचरुपुरोडाशादिकंहविः हूयतेस्तूयते देवगणोऽनेनेति हविरित्यर्थः वह्नौप्रविष्टंहुतंसद्वह्निरूपेणप्रज्वलत् वह्निरेवभवतिन पुनर्यजमानमासादयति नागच्छतितद्वत् । तत्रैवोपदिश्यतेशैवोमन्त्रः पंचाक्षर । तन्मुक्तिस्थानंयथाऽम्रादिफलंतदाऽरामान्तरेऽस्तितिकस्याचिद्वाणीमुपश्रुत्यतत्तुदेशांतरेकालांतरेवोपलभ्यतेनतथेह।तारकोपदेशश्रवणसमकालएवमुक्तिफलावाप्तिरित्यर्थः। यत्रोपदिश्यतेतदेवमुक्ति स्थानन्तदोंकाररूपम् । ततोमदर्पितकर्मणांमध्येवाशिवे अर्पितानिविहितान्यग्निहोत्राशिवाराधनानि । अविहितानि स्वाभाविकानिनिमेष कण्डूयनादीनि । प्रतिषिद्धानिस्तेयपरहिंसादीनिचसर्व कर्माणिचयेमध्येवार्प्पयन्ति तेषामित्यर्थः। मदाविष्टचेतसां गृह्यावेशवत् । मदाविष्टंमयाप्रविष्टंचेतो येषान्तेषां अथशुकजडभरतादिवन्मदेकमात्मानन्दहर्षेण आविष्टंचेतोव्यवहारातीतमलौकिकंयेषान्तेषामित्यर्थःमदीहर्षेभावेघञ्। मद्रूपतामदभिन्नत्वमेव भवति नान्येषांमयिसर्वक्रिया समर्पणमकुर्वतां मदनावेशितचेतसांवामद्रूपतानभवति । बृह्मविद्येयंबृह्माविद्येयम् । तस्मात्काश्यामेवासीना वीर्यवन्तऊर्ध्वरेतसः। वीर्यन्नृबीजंशुक्रंतद्वंतइत्यर्थः । यद्वावैराजाग्नेस्संभूतं यत्परंवीर्यं तद्भस्मेतिश्रूयते। तद्भस्मसदाये धारयंतितएव वीर्यवंतइतिश्रीबृह्मज्जबालोपनिषद्वचनादवगम्यते । तथाहि रुद्राग्नेर्यत्परंवीर्यं तद्भस्मपरिकीर्त्तितं । तस्मात्सर्वेषुकालेषुवीर्य वान्भस्मसंयुतइति। अयंपक्षस्सर्वसाधारणः । पुरोक्तस्तुसन्न्यासिविषय

इत्यवसीयते। तस्माद्यथाकथंचित्। काशीनिवासिनोवीर्यवंत एव भवेयुरिति तात्पर्यार्थः। विज्ञानघनंब्रह्मकोशं चतुर्जालं वक्ष्यमाणलक्षणं शिवंमामेवाभिध्यायन्तो मुक्तकिल्बिषामय्ये वलीनाभवंतीत्यर्थः।

नन्वेतावताशैवषडक्षराष्टाक्षरमन्त्रौवा प्रणवोज्ञानंवाता रशब्दार्थइत्यासीत्। अनन्तरंभगवान् कदावोपदिशतिदेहे देहाभिमानिनिसतीति चेल्लोकेगुरुसन्निधौवेदान्त महावा क्यार्थविचारजन्यज्ञानवज्जीव न्मुक्तिर्वक्तव्या। यदिजीव त्ययमन्यस्मैचोपदेष्टुं शन्कुयात्। नतथादृश्यते। आहोस्वि त्देहपातात्पश्चात्चेत्। श्रु। इहचेदवेदीदथसत्यमस्तिनचेदि हावेदीन्महतीविनष्टिः। इहचेदशकत् बोद्धुंप्राक्शरीरस्य विस्सृसः। ततस्सर्गेषुलोकेषु शरीरत्वायकल्पते। यथादर्शे तथात्मनियथास्वप्नेतथापितृलोकेइतिश्रुतेः स्थूलंविनाऽन्यदे हस्यकरणवैकल्याच्च तत्वाप्रतिभानतावगम्यते। शास्त्रन्तुसर्व तोमुखंदृश्यते। तथाहिकौर्मे यत्रसाक्षान्महादेवो देहान्तेस्व यमीश्वरः। व्याचष्टेतारकंब्रह्म तदेवेदंविमुक्तिदम्। काशी खण्डे। सर्वान्जन्तून्मोचयेदंतकाले विश्वेशोत्रश्रोत्रमन्त्रोपदे शात्। तदत्रोत्क्रमणेसर्वजन्तू नांहिश्रुतौहरः। तारकंब्रह्म व्याचष्टेतेनब्रह्मभवन्तिहि यावंतएवनिवसन्तिचजंतवोत्रका श्यांजलस्थलचराश्च षजंबुकाद्याः। तावंतएवमदनुग्रहरुद्रदे हादेहावसानमधिगम्यमयिप्रविष्टाः। ब्रह्मज्ञानन्तदेवाहंकाशी संस्थितिभागिनाम्। दिशामितारकं प्रान्तेमुच्यन्तेतेपितत् क्षणादिति। अविमुक्तजाबालश्रुतौ। सोविमुक्तउपास्योयो विमुक्तेज्ञानमाचष्टे योवैतदेवंवेदेति। तत्राधिभूताविमुक्तंवा

ह्यप्रसिद्धमेव । अध्यात्माविमुक्तं भ्रूमध्यं । तर्हिस्थूलदेहेस त्येवसंभवतितारोपदेशः ।

अथसूतसंहितायाम् । यानिकर्माणि बाह्यानिमरणादू र्ध्वमच्युत । ममज्ञानप्रदानानि कथितानिमयातव । तानिक ल्याणवृत्तस्यविद्धि नान्यस्यकस्यचित् । पापिष्ठानामपिश्र द्धाविहीनानांजनार्दन । मुक्तिदंमरणादुर्ध्वं शिवक्षेत्रेषुवर्त्तन मिति । तथाचास्यांभस्मजा बालश्रुतौ । काश्यांत्यक्तकुण पानशैवानानीयांके स्वस्यैवसंवेश्यमाभूदेषां जन्ममृत्युश्चेति तारकम्मनुमुपदिशामीति सूक्तिभिश्शरीरपाता त्पूर्वंपश्चादि तिचप्रतीयते तत्रकिंतत्वमितिविश्वासिमइतिचेच्छृणु । श्रीका श्यादौसर्वत्रदेह पातात्पश्चादेवतारोप देशोरहस्यत्वेनाऽप्रका श्यत्वात्सतिदेहनसंभवाति । सतिदेहेश्रीकाशी तारोपदेशा भ्युपगमे गुरुसन्निधौमहा वाक्यार्थविचार जन्यज्ञानाज्जीव न्मुक्तिवदितियदुक्तन्तन्न। मिथोवैषम्यात् । आधुनिकवेदां तपाठप्रवचनादिकं बहुधारव्यातिलाभादि सिध्यर्थंप्रवृत्ते । साधनपौष्कल्याभावात्कालदोषाच्च । यदिनामकश्चित्त त्त्रोपदेष्टाचशिष्योवाभवेत्सतुमद्गुरुरेव। आश्चर्यो वक्ताकुश लोस्यलब्धाश्चर्योज्ञाता कुशलानुशिष्टइति । यततामपिसि द्धानांकश्चिन्मांवेत्तितत्वत इतिस्मृतेः । अनुभवसिद्धंचैतत् । उपदिष्टतत्वास्सर्वेपि नात्मविदोभवन्ति। अत्रकाश्यांमूलगुरु स्स्वयंरुद्रएवोपदेष्टा अन्यत्रतत्प्रसादिनइति । तन्मुखात्तत्व विचारात्पापक्षयेसतिपंचषैर्जन्मभिः क्रममुक्तिर्भवेत्। अत्राऽ विमुक्तमृतानान्तिरश्चान्त रुगुल्मादीनामपि पुनरावर्त्तिरहि तामुक्तिरितीष्यते । नात्राधिकारविचारः । अन्यत्राधिका

रविचारोऽस्त्येव । तस्मान्मूलगुरूपदेशस्यविशेषोस्त्येव । कूर्मकाशीखण्डदेहांतकाल शब्दौश्रोत्रमन्त्रोप देशादितिजंतूनांतुश्रुतौहरइत्यादि वचनान्यानंतर्य वाचकान्येव । स्वाप्निकशरीरवल्लिंगशरीरस्य श्रोत्रादिकरण सद्भावादुक्तमुचितमेव । स्वांकेनिवेश्येत्यत्रापि लिंगेऽन्वयः । तेनन्यायेन प्राणेषूत्क्रममाणेष्वित्यत्रापि उत्क्रांतेष्वित्यनुसन्धेयम् । उत्क्रमणानंतरंकालयापनं विनैवोपदिशतीतितात्पर्यम् । ननुकाशीकृतकर्मणोरुत्कटत्वेन सुचिरमनुभवितव्यतयाकालविप्रकर्षोभवेदितिचेन्न । सर्वमीशाज्ञयाक्षणमपिकल्पशतमिवभवेत् । तथाचवासिष्ठे । यथास्वप्नेमुहूर्त्तेपि शतसंवत्सरभ्रमः । तथामायाविलासोत्थेजायते जाग्रतिभ्रमः । तथाचसंक्षेपशारीरके । सुप्तोजन्तुस्स्वल्प मात्रेपिकालेकोटीः पश्येद्व्यत्त संवत्सराणाम् । कोटीः पश्येदेवमागामिनीनां जागृत्काले योजयेत्सर्वमेतादिति वचनात्क्षणेनप्राणिकर्मसाम्यंकारयित्वातदैवोपदिशतीत्यर्थः । कालकालशासनादल्पोपि कालो महान्सोपिस्वल्पो भवेदितिभावः । सत्येवंमुक्तिदम्मरणादूर्ध्वंशिवक्षेत्रेषुवर्त्तनामित्यूर्ध्व शब्दोपिमरणानंत रमुपदेशात्पूर्वं कार्यांतरमेववारयति । नहिकर्मफलानुभवमपिरोद्धुमर्हति । अत्रश्रीब्रह्मानंदाः।श्रीकाश्यादिस्वायंभवस्थानमृतजंतुमुक्तिवैषम्यमेवमाहुः। अविमुक्ताद्वरंस्थानं तत्समंवानाविद्यते। वरिष्ठमविमुक्ताख्यंस्थानमेवततोभुवम्। एतेषाम्मुक्ति वैषम्यहेतुत्वादत्रसर्वथा । उक्तरीत्यातारतम्यंस्थानानांयुक्तमेवहि। सायुज्यमुक्तौवैषम्यगंधा भावोहिविद्यते । सालोक्यादिषुसर्वासु सशरीरासुमुक्तिषु । संसारार्णवपोतेषु स्थानेष्वेतेषुशूलिनः ।

न्मृतानांपुनरावृत्ति स्सर्वथानहिविद्यते । तदीश्वरस्यस्थाने
षुमृतानांपुण्यगौरवात् । जीवानांमुक्तिवैषम्यंकीदृशङ्कथये
तिचेत् । परांतकालेसायुज्य मुक्तिरेषांसमापितु । परांत
कालपर्यंतम्भोगोविषमएवहि । स्थानेष्वीशस्फूर्त्तिवैषम्या
दत्रमृतदेहिनाम् । शिवसालोक्यादिमुक्तिवैषम्यङ्केनवार्य
ते । स्थानेषुतारतम्येनमहादेवः प्रकाशते । विलक्षणेष्वने
केषुदर्पणेषुमुखंयथा । परांतकालेतज्ज्ञानप्राप्तायामविशेषतः।
सायुज्यमुक्तौवैषम्यवार्तापिनहियुज्यते । सायुज्यमुक्तिर्ना
मैषासुखदुःखविवर्जिता । गौरीश्वरस्यस्थानेषुमृतानांदैवयो
गतः क्रममुक्तिस्सरक्तानामेवैषाकथिताबुधैः विरक्तानांतु
शास्त्रेषुसद्योमुक्तिर्विनिश्चिता । इत्थंशिवस्थानमृतौमुक्ति
वैषम्यञ्चेन्मास्त्वेतत् । ज्ञानंयोगंवासुखेनाभ्यस्यमुक्तिप्रा
प्स्येइतिचेत्प्रस्थानत्रयमभ्यस्यस्वस्थानन्नाधिगच्छति । स
र्वशांतिम्पठित्वापिनमनश्शांतिमृच्छतीतिन्यायमाश्रित्यप्रह-
सन्पुनराह । ज्ञानाधिकारः कस्यापिकलौनैववि मुक्तये ।
अतश्शिवस्थानमेकमाश्रयेन्मतिमत्तमः । बहुव्रीहिसमासेन
वाच्यायोगीश्वराभुवि । कर्मधारयसंज्ञेनवात्रतत्पुरुषेणतु ।
वाच्यायोगीश्वरानैवसन्ति भोगिसमाशनाः । किंबहूक्यावि
चारेतुकलौयोगकथावृथा । इतिवचनैश्शिवस्थानमृतिरेवमु
क्तिसाधनमित्यर्थः।अ नेनोपदेशकालोभैरवशिक्षासमयःरुद्र
पिशाचत्वप्राप्तिः। श्रीरुद्रसारूप्यंअविमुक्तश्रैष्ठ्यंसालोक्या
दिमुक्तित्रयवैषम्यंयोगज्ञाना भ्यासेषु मुक्त्युपायेषुविविधेषु
सत्स्वपिस्वायंभवस्थानाश्रयएव मुख्योपायः । ततोप्यवि
मुक्तस्थितिरेववरिष्ठे त्युपदिष्टम्। ततः काश्यामेवमुक्तिका

मानामासनंकार्यम् । तस्मादेवतदासनं धीमद्भिर्नत्याज्यंन्न त्याज्यमेव । एवंचभगवतीश्रुतिः सज्जनगतिमेतावतीमति प्रेम्णोपादिश्यपुनर्दुर्जनानित्थंशास्ति । येचान्येकाश्यामित्या दिना । काश्यांलिंगरूपिण्यामित्यन्तेनवाक्यद्वयकेन । येचा न्येउक्तविपरीताः खलाः काश्यांपंचक्रोशांतराले पुरीषका रिणः । पुरीषंनिष्ठीवनंकुर्वन्तीतितथोक्ताः । अनेनपंचक्रो शाद्बहिरेवनिष्ठीवेदित्यवसीयते । ततोनिर्गच्छतः पुंसः पंचतावाप्तौदुर्गतिरेवस्यात् । तद्वन्तरावसर्गेभैरवशिक्षाभ वेत् । कथमेतदुपपद्यतइत्यत्रोच्यते । आमृतेरत्रैवनिवासिष्ये इतिक्षेत्रसन्यासविधिं विनाकार्यान्तरेणाऽऽगत्योषित्वामृत स्यतुभैरवशिक्षा । नहिनियतवासिनः ।यथाराज्ञोऽनर्घवसनंत न्निर्णेजकस्कंधसंगान्नदूष्यते । यथावाआराम पालकस्याऽश नशयनादिचिन्हदर्श नान्नकुप्येत । एवमगतीनां शिवैकशर णानांमला दुत्सर्गान्नभैरवः क्रुध्येदेव । यतः प्रत्यहंविश्वे शार्चनंकार्यं नपंचक्रोशांतरेपुरीषंकार्यमितिचोक्ते दीनोजंतु र्यंकिंकरोतु । तस्मादानियतवासिनामेवतच्छिक्षेत्यवग म्यते । त्यक्तभस्मधारणाःत्यक्तंभस्मोद्धूल नत्रिपुण्ड्रधारणं ग्रामदेशकुलशिष्टाचारइतिविपरीतधियायैर्बुद्धि पुरस्सरंनधा र्यते । तएवत्यक्तभस्मधारणाः।तथात्यक्तरुद्राक्षधारणाःत्रिस हस्रुद्राक्षानारभ्य परमावध्येकाक्षधारण पर्यन्तंविहितम् । तत्रैकमप्यक्षंयैर्नधार्यते । अथवाप्राक्रुद्राक्षान् धृत्वापश्चात् स्वैर्वेदुष्याद्यभिमानेनवायैः परित्यक्तंरुद्राक्षधारणम् । मतां तरस्नेहेनवापरित्यक्तंतेतथोक्ताः । त्यक्तसोमवारव्रताः । उमयासहितस्सोमस्तस्यवारः । उदयादुदयंवारामिति ज्योति

चैचनाद्वारशब्दोदिनपर्यायवाची । श्रीरुद्रविष्ण्वादिसर्वसं भूत्यैकदापिकाले स्वाभिन्नामात्मशक्तिंपृथगि वविधायता मुपयेमेइतिततएवसोमवारइति चप्रतीयते । यथाचार्द्रानक्षत्रे स्वलास्यंदेव्यैदर्शयामासतथाचगौरीपरिणयादि नमित्यर्थः। ततस्सोमस्यवारः सोमवारस्तस्यव्रतंव्रियतेइति व्रतंवृङ्वरणे इतिधातोस्तप्रत्ययः। इदंसोमवारव्रतंयैस्त्य क्तंतेतथोक्ताः। कृष्णाष्टमीचतुर्दश्यादिशै वव्रतेषुसोमवारस्यैव प्राधान्यादे तदुक्तम्। त्यक्तविश्वेश्वरार्चनाः । विश्वेश्वरस्यार्चनंविश्वेश्व रार्चनम् । नित्यंसाक्षाद्विश्वेश्वरलिंगार्चनाऽसंभवेकाश्यामंत रालेयत्किंचिदपिस्वात्मलिंगं वाविश्वेश्वरतयाभिमानेनपूज नीयमित्यर्थः । तदापित्यक्त्वायेवर्त्ततितएवतथोक्ताः त्य क्तांतर्गृहयात्राः तल्लक्षणमुच्यतेकाशी खण्डे ।

अंतर्गृहस्ययात्रांवैकुर्यात्प्रत्यहमादरात् । प्रातस्स्नानं विधायादौनत्वांपंचविनायकान् । नमस्कृत्याथविश्वेशंस्थि त्वानिर्वाणमण्डपे । अंतर्गृहस्ययात्रांवैकरिष्येऽघौ घशांतये। ग्रहीत्वानियमंचेति गत्वाथमणिकर्णिकाम् स्नात्वामौनेनचा गत्यमणीकर्णीशमर्चयेत् । अथतत्तन्नाममात्रमंकथते । सिद्धि विनायकमणिकर्णीश्वरकंबलाश्वतर वासुकिपर्वतगंगाकेशव ललिताजरासंधसोमनाथदाल्भ्य शूलटंकेशवाराहब्रह्मागस्त्ये शकाश्यपहरिकेशवैद्यनाथ ध्रुवगोकर्णहाटकेश हस्तिक्षेपतटा ककीकसेशभारभूतचित्रगुप्त चित्रघण्टादुर्गापशुपतिपिताम हेशकलशेशचंद्रेशचंद्रकूपवीरविद्याग्नीशनागेशहरिश्चंद्राचिंता मणिविनायकसेना विनायकसीमाविनायक करुणवसि ष्ठवामदेवत्रिसंध्येशविशालाक्षीधर्म विश्वबाहुकवृद्धादित्य

चतुर्वक्त्रब्राह्मीमनः प्रकाशेश्वरेशानचण्डचण्डीश्वरभवानीश
ङ्करान्नपूर्णाढुण्ढिविनायकराजराजेश्वरलांगलीश्वर नकुलेश्वर
परान्नेश्वरपरद्रव्येश्वरप्रतिगृहेश्वरनिष्कलङ्कमार्कण्डयाप्सरसे-
श्वरगङ्गेश्वरज्ञानवापिनन्दितारकेश्वरमहाकालदण्डपाणि महे
श्वरमोक्षेश्वरवीरभद्रेश्वराविमुक्तेश्वरमोदप्रमोदसुमुखदुर्मुखग-
णनाथविश्वेशान्नपूर्णायैनमोनमः। इतिपरिक्रम्यसम्पूज्य ।
ततोमौनम्विसृज्याथमन्त्रमेतमुदीरयेत् । अंतर्गृहस्ययात्रेयं
यथावद्यामयाकृता। न्यूनातिरिक्तयाशम्भुरनयाप्रीयतांमयि
इतिमन्त्रंसमुच्चार्यक्षणंवैमुक्तिमण्डपे । विश्राम्ययायाद्भवनांनि
ष्पापः पुण्यवान्नर इतिप्रोक्तदर्शनंयथाशक्तिकार्यम् । अथ
वाअंतर्गृहमनाहताज्ञाब्रह्मरंध्रस्थानानि । तद्यात्रानित्यंध्या
नारम्भेमनः प्रवेश कार्यः। तांयेत्यजंतिनाचरंतितेत्यक्तांत
र्गृहयात्राः। त्यक्तपञ्चाक्षरजपाः । नकारादियकारांतः
पञ्चाक्षरः सप्रणवइत्यर्थः अकारादिनादांतपञ्चवर्णात्म
कोन्यस्सूक्ष्मपञ्चाक्षरोवा । तदुभयविधमन्त्राभ्यासाविहीना
स्त्यक्तपं चाक्षरजपाः। त्यक्तरुद्रजपाः त्यक्तभैरवार्चनाः।
प्रत्यहमेकवारंवाश्रीरुद्रजपः श्रीभैरवार्चनञ्चकार्यंयेतन्नकुर्व
न्तितेतथोक्ताः। एवंसत्कृत्यविहीनाः पापिष्ठायेते सर्वेका
श्यांपरेताभूत्वा नानाविधांघोरांभयंकरांभैरवींभैरवाज्ञायत्तां
यातनां पीडामनुभवन्ति । तेषांसायातनाकिमात्यन्तिकीवे
त्यतआह । निषिद्धकर्मकारिणः विहितत्यागिनश्चयेभव
न्ति । तेरुद्रपिशाचरूप प्राप्यात्रिंशत्सहस्रवर्षपर्यंतम्महादुः
खम नुभूयततश्शुद्धामांप्रपद्यन्ते प्रपतनंकुर्वन्ति। तस्माज्जन्त
वःकाश्यां पापकारिणोपिकाश्या मेवमृताश्चेत्पुनर्भैरव शिक्ष

यासंस्कृतास्संतः परमेश्वरमेवप्रपद्यन्तेनजन्मभूमिमित्यर्थः ।
तत.काश्यामेवनिवासःकार्यं इतिसिद्धम् । येचमूढाअन्तर्गृहे
परमेश्वरस्यात्यन्ताभ्यर्हितेदेशे मोहाद्विषकवलनादि जनिता
न्तस्तोदनवा । भ्रमेणआभिचारादिनिमित्तबुद्धिवैक्लव्येन
वारेतोमूत्रपुरीषमित्येकवद्भावः। विसृजन्ति । तेपापिनोम
मतनोरन्तरेवकुर्वन्ति तत्सर्वमनन्तया तनाबीजमेवभवति ।
पुनस्तेमूर्खा नमामेवरेतोमूत्रादिनादूषयन्ति । स्वस्वपितॄनेव
तेसिंचन्तिमूत्रादिना । नन्वत्रममतनोरन्तरेवासिंचन्तीतिनि
न्दित्वास्वपितॄनेवासिंचत इतिपाश्चात्योक्तिरनर्थिकेतिचेन्न ।
लौकिकाभिप्रायमेतत् । लौकिकः क्वयास्यसीतिप्रष्टेगंगा
स्नानायेत्युक्ते पुनः किंकार्यमितिप्रष्टे गयाश्राद्धपिण्डदानेन
पितॄनुद्धर्तुंयामि । इतोपिजन्मसाफल्यम्ममाकिमस्तीति ।
श्रु । यत्रगंगाचयमुनायत्रप्राचीसरस्वती । यत्रविश्वेश्वरोदेव
स्तत्रमाममृतंकृधीतिश्रुतिविहितविश्वेश्वर शरणवरणम् ।
श्रीकाशीविहित श्राद्धशतं चविस्मृत्यगंगास्नानं गयाश्राद्धंच
लोकोबहुमन्यते । किंचकथमस्मिन्पितृदिनेशिवपूजांकुरुषेश्रा
द्धानन्तरमेवपूजाकार्या इत्येवन्दैवोपहतधियांमूढानां मतम् ॥
सकलकुलकूटस्थस्यसर्वात्मकस्य सर्वेश्वरस्यसमर्चनादेव पितृ
श्राद्धंगंगावगाहनंच श्रद्धातिशयदर्शनात्तन्मतानुसारेणोक्त
म् । अन्यथाश्रु । नेवस्त्रीनपुमानेषनैवचायन्नपुंसकः । यद्यच्छ
रीरमादत्तेतेनतेनसयुज्यत इतिश्रुतेरस्यजन्तोसर्वजन्मसुया
तायानि पुमाधारणेषुरवरोष्ट्र शुनकादिपुतत्तत्पितॄणां युग
पत्तर्पणात्मकं शिवार्चनं विस्मृत्याविलपतां जडानाम्ममतनुस्त
न्नर्थान शिवतोना आज्ञापयतीतिभावः। तमेवपापकारिणं यो

न्तर्गृहनीरीकरणादि पापमकरोत्तमेव । नहिमृतजन्तून्स र्वानित्यर्थः । नीललोहितः आपादशीर्षनीलवर्णः लोच नान्यंगार कुण्ठवल्लोहितान्यस्य सन्तीतिनीललोहितोभैरव स्तंपापकरिणं क्रूरदृष्ट्यापश्यति . अपश्यदिति । ततः किंकुरुतेअस्त्रमण्डले विविधायुधसंघे । ज्वलत् ज्वलनकुण्डे षुअन्येषुतप्तताम्रकटाहेषु असिपत्रवनादौ चेत्यर्थः । पातयति गिरिशिखरात् गण्डपाषाणवदिति भावः । ततश्चाप्रमा देनानिवसेत्काश्यांलिंगरूपिण्याम् । सद्योजातायवित्महेमहा देवायधीमही । तन्नोघोरः प्रचोदयात् । इयं पशुपाशमो चिनीभस्मगायत्री भस्ममहिमानंपुरोक्तविधंगायतः प्रशंसय तः पुरुषान् भवात्त्रायतेइतिभस्मगायत्री भवति । इममुपा सन विधितत्साधकबाधकधर्मांश्चोपदिश्यपरमपावनं सक लमंगलंसच्चिदानन्दात्मकंपरशिवाद्वैतं वर्षविन्दुसमूहानांम हांबुधिवच्छिवोपादिष्टजन्तूनांपरमेकायनं श्रीकाशीमृतसर्वप्रा णिसर्वस्वंशान्तं शिवमुपादिशति । येनोपदेशेन विनासर्वापि कलाविकलाभवेत् तांविद्यांसंगृहेणोपदिशतिसिद्धं ब्रह्मेति ॥

सिद्धंब्रह्मपरंज्योतिः स्वयमानन्द विग्रहम् ।
वियदादि महाभूतविज्ञातृत्वेनभासते ॥

सिद्धंपुरैवप्रसिद्धं सुस्थितंपरिनिष्ठितमिति । सदेवसोम्येदमग्रआसी दितिश्रुतेः ब्रह्मबृहतेर्धातोःव्योमवत्सर्वव्यापकं स्वयंसर्वप्रत्यगात्मभूतमानन्द विग्रहमानन्द एवविग्रहआका रोयस्यतत्परंज्योतिः सिद्धमित्यनेनसद्रूपम् । ज्योतिश्शब्देन प्रज्ञानरूपं आनन्दविग्रशब्देनशर्कराखण्ड वदखण्डानन्दैक रसम् । ब्रह्मपूर्णवस्त्वेकमेवपरमार्थतोस्ति नान्यत्किंचिदिहावि

द्यते । चेतनाचेतनात्मकमिदं दृश्यंनास्तीकिमितिचेत् मरुभू जलतरंगवत् । वियदादिमहाभूतविज्ञातृत्वेन भासते ननुसु खदुःखानुभविनइमेप्रमातारः । शब्दादिसूक्ष्मभूतानिव्यो मादीनिस्थूलभूतानि चभौतिकानि घटादीनिचसन्त्येव । कथमन्यन्मृषेतिचेत् । ब्रह्मैवशब्दादिरूपेणव्योमादिरूपेण घटादिभौतिकात्मनाचभ्रांतानां मरुभूमौजलतरंगादिवत् । भासतएवनहिवियदादि स्वसत्तयाभाति । नातः परंवेदि तव्यंहिकिंचित् इतिश्रुतेः । नामरूपात्मकस्य प्रपंचस्यसर्व कारण सर्वाधिष्ठानब्रह्मस्वरूपमन्तरेण स्वसत्ताभावात् । श्रुय तेहिआत्मैवेदं सर्वंनेहनानास्तिकिंचन । ब्रह्मैवेदममृतंपुर स्तादिति श्रीभगवत्पादाश्चभूरंभांस्यनलोनिलो बरमहर्नाथो हिमांशुः पुमानित्याभातिचरा चरात्यकमिदं यस्यैवमूर्त्यष्ट कमिति । तस्मात्सिद्धंपरंज्योतिःस्वयं ब्रह्मैवहिचेतनाचेतनरू पेणभासतइत्यर्थ अथ फलश्रुतिः। य इमांकिन्नित्यंब्राह्मणानां कर्मकर्तव्यं यदकरणेप्रत्यवैतीत्यारभ्य वियदादिमहाभूतविज्ञा तृत्वेन भासतइत्यन्तामुपनिषदं वा सकलां वा परशिवप्रति पादिकांश्रुतिं तदर्थविवेक सहितान्नित्यंयो ब्राह्मणः क्षत्रियो वाश्रद्धयाधीते । सोऽनुपनीतोप्युपनीतोद्विजोभवति । अश्रो त्रियोपिवेदवेदांगार्थ ज्ञानहीनोपिइमामेकामुपनिषदं जानी ते यदिश्रोत्रिय एवभवति । ससर्वैरनुध्यातोऽयम्महानिति ज्ञानविषयो भवति । तथासर्ववेदाध्येता । सोग्निवत्पूतः । सवायुवत्पूतः । ससत्येनानृतभाषणवर्जनेनपूतः । किंचससर्व पूतोभवतितस्याउपनिषदो ऽर्थावधारणात्सर्वतीर्थस्नानफल मवाप्नोति । तावन्मात्रमपिन । किन्तुसर्वैः क्रतुभिरिष्टंचभव

ति। अथकालाग्निरुद्रस्सर्वार्थसंगृहंकंचिदर्थमित्थंप्रोवाच । शिवएकोध्येय श्शिवंकर स्सर्वमन्यत्परित्यज्य। एतामुपनिषदमधीत्यद्विजोगर्भवासाद्विमुक्तोविमुच्यत इत्योंसत्यम् ।

भद्रंकर्णेभिः श्रुणुयामदेवाः भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिः । व्यशेमदेवहितंयदायुः । स्वस्तिनइन्द्रोवृद्धश्रावाः। स्वस्तिनः पूषाविश्ववेदाः । स्वस्तिनस्ताक्ष्यों अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु । ओंशान्तिः शान्तिः शान्तिः ॥

इतिश्री भस्मजाबालोपनिषत्स टीकासंपन्ना । टीकेति टीक्यतेज्ञायतेऽर्थोऽनयेतिटीका। टीकृ। गतौ विषमपदव्याख्येत्येके । निरंतरपदव्याख्येत्यपरे। अत्रतुविषम पदानिहिव्याख्यातानि। तस्मान्ननिरन्तरव्याख्येत्यर्थः । श्रीभैरवः प्रसन्नो मदागोविस्मृत्यसादरम् ॥ शिवन्नयतुमामंते सदिशत्वनिशंशिवम् ॥

श्रीशिवमस्तु ।

---